
परिक्षित
शुक
कण्व
वसिष्ठ
आत्रेय
भारद्वाज
बकदा
लभ्य.
श्रीधर
व्यास
अथश्रीमद्भागवतपंचमस्कंधचूर्णिकाप्रारभ्यते.
प्रियव्रतराजा
आग्नीध्र
बर्हिष्मती

श्रीगणेशायनमः श्रीकुलदेवतायैनमः राजोवाच हेमुनेभागवतःआत्मारामः प्रियव्रतः गृहेकथंअरमत् य
न्मूलः बंधः मुक्तसंगानांपुंसांगृहाभिनिवेशोभवितुंनार्हति किंच दाराद्यासक्तस्यमोक्षःभगवन्मतिश्च कथमभूत् एनंसं
शयंनिवर्तय श्रीशुकउवाच बाढमुक्तंभगवच्चरणे आवेशितचेतसः येतेभगवत्कथांस्वमार्गंनत्यजंति हेरा-
जन् प्रियव्रतः नारदात् ज्ञानंप्राप्तःसन् राज्याधिकारात् स्वपराभवंमन्यमानः स्वपित्रामनुनाराज्यंकुरुइतिबोधितोपित-
न्नैच्छत् तदाब्रह्माचंद्रवत् प्रकाशमानः गंधमादनद्रोणींप्रकाशयन् तत्रागत्यअकथयत् ब्रह्मोवाच हे
तात अहंतेसत्यंब्रवीमि वयंसर्वेभगवद्वशाः तत्कृतंहंतुंकोपिनसमर्थः अतः इदानींत्वंकियत्कालंराज्यंकुरु पश्चात् मुक्त
संगःसन् स्वरूपंभज श्रीशुकउवाच इत्युक्त्वाब्रह्मायथौ मनुःनारदाज्ञयातंराज्येभिषिच्यस्वयंउपरराम प्रि
यव्रतःभगवच्चरणेमनःनिवेश्यमहींशशास अथविश्वकर्मणःप्रजापतेःकन्यांबर्हिष्मतींउपयेमे तस्यांआग्नीध्रम् इ
ध्मजिह्वं २ यज्ञबाहुम् ३ महावीरं ४ हिरण्यरेतसम् ५ घृतपृष्ठम् ६ सवनम् ७ मेधातिथिं ८ वीतिहोत्रं ९ कविम्
१० इतिदशपुत्रान् ऊर्जस्वतींकन्यांचजनयामास तेषांमध्येकविः १ महावीरः २ सवनः ३ इतित्रयः ऊर्ध्वरेतसःसंतःपा
रमहंस्यमाश्रमंअभजन् किंच तेब्रह्मप्रापुः अन्यस्यांभार्यायांप्रियव्रतात् उत्तमः १ तामसः २ रैवतः ३ इतित्रयःपुत्राःते
मन्वंतराधिपतयःआसन् एवंपुत्रान् उत्पाद्य एकादशार्बुदवर्षाणिपृथ्वींबुभुजे किंच भगवान् सूर्यः मेरुंप्रदक्षिणीकुर्वन् रात्रि
दिनविभागंकरोति तांरात्रिमपिदिनंकरिष्यामीति भगवदुपासनबलःवायुसमवेगेनतेजोमयेनरथेन सप्तवारंतरणिंअन्वधा १
वत् द्वितीयःसूर्यइव तेनद्रथचक्राग्रेणकृतपरिखाःते सप्तसिंधवःआसन् तदंतरस्थाःसप्त जंबु १ प्लक्ष २ शाल्मलि ३ कुश ४ क्रौं-

च ५ शाक ६ पुष्कराख्याः ७ पूर्वद्वीपात् द्विगुणमानेन द्वीपाः आसन् तथाक्षारोद १ इक्षुरसोद २ सुरोद ३ घृतोद ४ क्षीरोद ५ दधिमंडोद ६ शुद्धोदाः ७ एते सप्तसमुद्राः प्रतिद्वीपे द्वीपमानेन परिखाइव आसन् सः प्रियव्रतः सप्तद्वीपेषु आग्नीध्रादीन् पुत्रान् अधिपतीन् चक्रे ऊर्जस्वतींकन्यां शुक्राय ददौ यस्यां देवयानी आसीत् एवंअपरिमित बल पराक्रमः निर्विण्णः सन् इदंआह अहो असाधुमया आचरितम् वनितायाः क्रीडामृगंमांधिक्धिक्इति गर्हयांचकार एवंनिर्विद्यपुत्रेभ्यः राज्यंविभज्यमहिषींच त्यक्त्वा नारदोपदिष्टंमार्गं पुनरेवानुससार प्रियव्रतकृतंकर्म ईश्वरंविना अन्यः कः कुर्यात् यः सप्तसमुद्रान् द्वीपविभागंच चक्रे भौमंदिव्यंसुखंनिरयवत् मत्वा साधुप्रियः पुनः भगवद्भक्तिंअकरोत् ४९ इति पंचमे प्रथमः १ श्रीशुकउवाच एवंपितरिसंप्रवृत्तेसति आग्नीध्रः राजा जंबुद्वीपौकसः प्रजाः पुत्रवत्पालयामास सः कदाचित् पुत्रकामः मंदरगुहायांब्रह्माणंआराधयामास ब्रह्मा तत् ज्ञात्वा सभायांगायंतींपूर्वचित्तिं अप्सरसंनोदयत् सा तदाश्रमसमीपे एत्य बभ्राम तस्याः नूपुराद्याभरणस्वनंश्रुत्वा नरदेवकुमारः नेत्रेकिंचित् उन्मील्य तांदृष्ट्वा कामवशंगतः सन् जडवदुवाच त्वंकासि किंचिकीर्षसि किंदेवमायासि मृगतुल्यान् मादृशान् विषयिणः वशीकर्तुं विज्ये धनुषी बिभर्षि किम् हे सुहृत्तममे तावकंलोकंदर्शय यत्र त्वोजनः उरसाइत्थं अपूर्वावयवौ बिभर्ति तपश्चरतांतपोघ्नंइदंरूपंत्वयाकेन तपसा लब्धं हेमित्र मयासह तपश्चर्तुं त्वमर्हसि त्वांअहंनत्यजामि इत्यादि श्रुत्वा अप्सरा च तस्य राज्ञः बुद्धिशीलरूपवयः श्रियौदार्येण मोहिता सती तेन सह अयुतायुतवर्षाणि भौमस्वर्गभोगान् बुभुजे तस्यां आग्नीध्रः नाभिः १ किंपुरुष २ हरिवर्ष ३ इलावृत्त ४ रम्यक ५ हिरणमय ६ कुरु ७ भद्राश्व ८ केतुमाल ९ संज्ञान् नव पुत्रान् अजनयत् साप्रतिवर्षं नवपुत्रान् सूत्वा तंत्यक्त्वा ब्रह्माणंययौ ते पुत्राः पित्रा यथाविभागं दत्तानि स्वनामभिः ख्यातानि जंबु-

यत्रपितरः मोदंते एवंसंपरेतेपितरि नवभ्रा चू॰
द्वीपवर्षाणिनवबुभुजुः आग्नीध्रोपितस्यांअतृप्तः सन् तामेवध्यायन् अंतेतल्लोकंप्राप इतिनवउदवह
तरः मेरुदुहितॄः मेरुदेवीं १ प्रतिरूपां २ उग्रदंष्ट्रीम् ३ लतास् ४ रम्याम् ५ श्यामाम् ६ नारीम् ७ भद्राम् ८ देववीतिं ९
न् २३ इतिपंचमेद्वितीयः २ श्रीशुकउवाच आग्नीध्रपुत्रः नाभिःअपत्यकामः सन् मेरुदेव्यापत्न्यासहयज्ञपुरु
षंअयजत् तत्रयज्ञेश्रद्धयाविशुद्धभावेनसम्यक् यजतः तस्यसतः वात्सल्यात् द्विभुजः सर्वालंकारयुक्तः भगवान् आविर्बभूव
तदाआविष्कृतभुजचतुष्टयं तेजोमयंकौशेयांबरधरंउरसिविलसच्छ्रीवत्सलांछनंशंखादिभिरुपलक्षितं मुकुटकुंडलकटक
कटिसूत्रहारकेयूरनूपुराद्यंगभूषणभूषितंहरिं दृष्ट्वासर्वेऋत्विगाद्याः नम्राःसंतः तंपूजयित्वातुष्टुवुः हेपूर्णत्वद्भृत्यानां अस्मा
कंतवार्हणंनमोनमः इत्येवसद्भिःउपशिक्षितं तवस्वरूपवर्णनंकर्तुंकोनामपुमान् अर्हति हेभगवन् त्वंनः वरान्दातुं आवि-
र्भूतोसितथापित्वद्दर्शनमेव अस्माकंवरोस्ति हेभगवन् भक्तैः अर्पितजलपल्लवतुलसीदूर्वांकुरैरपित्वंतुष्यसि अतः अनेन-
राजकृतयज्ञेन वयंइच्छितार्थंलभामहे हेहरे अयंराजर्षिः भवादृशींप्रजांइच्छति तांसंपादय एवंस्तुतः सन् भगवान्उवाच
हेऋषयः ब्रह्मवादः मृषाभवितुंनार्हति अतः अहंकलयाअस्यपुत्रत्वेन अवतरिष्यामि इत्युक्त्वाभगवान्अंतर्दधे ततःनाभेः
प्रियचिकीर्षयामेरुदेव्यांदिग्वाससांतपस्विनांनैष्ठिकब्रह्मचारिणांधर्मान्दर्शयितुंसत्वमूर्त्याभगवान्अवततार २१
इतिपंचमेतृतीयः ३ श्रीशुकउवाच अथउत्पत्त्यैवतंभगवल्लक्षणयुतंज्ञात्वाअमात्यादयः ब्राह्मणाश्चअयंनःराजा २
अस्तुइतिइच्छांचक्रुः सुयशसावीर्यशौर्यादिगुणैः श्रेष्ठत्वात् तस्यऋषभइतिनामपिताचक्रे तदास्पर्द्धमानः इंद्रःतस्मिन्वर्षेनव
वर्ष तदाऋषभदेवःप्रहस्यस्वयोगबलेनअजनाभेस्ववर्षेवृष्टिंचकार नाभिः यथाकालेऋषभदेवंराज्येभिषिच्यब्राह्मणेषुउप-
ओ॰१ ब्राह्मणानांउत्संगेनिधाय

निधायपत्न्यासहबरिकाश्रमंगत्वानरनारायणंउपासीनः कालेनमुक्तिंआपएवंनाभेःप्रसिद्धंकर्मकःपुमान् आचरेत् यस्यशक्रःक
र्मणाहरिः अपत्यतांप्राप्तः अथभगवान् ऋषभदेवः लोकशिक्षार्थंगुरुगृहेब्रह्मचर्यादिकृत्वागुर्वनुज्ञयागृहधर्मान्शिक्षयन् इंद्रद
त्तकन्यायांजयंत्यांआत्मसमान् शतपुत्रान् जनयामास येषांमध्येमहायोगीज्येष्ठः भरतः आसीत् येनेदंवर्षंभारतमितिव्य-
पदिशंति तमनुकुशावर्तः १ इलावर्तः २ ब्रह्मावर्तः ३ मलयः ४ केतुः ५ भद्रसेनः ६ इंद्रस्पृक् ७ विदर्भः ८ कीकटइतिनव ९ नव
तिमुख्याः कविर्हरिरंतरिक्षः प्रबुद्धः पिप्पलायनः आविर्होत्रोथद्रुमिलश्चमसः करभाजनः एतेनवमहाभागवताः एतेषांच
रितं एकादशेवक्ष्यामः एकाशीतिमिताः कनिष्ठाः ब्राह्मणाः बभूवुः अथभगवान् ऋषभः गृहस्थधर्मंशिक्षयन् स्वयंगृहस्था
श्रमंचकार यद्यत् श्रेष्ठः आचरति तदनुलोकः वर्तते सःसर्वैः क्रतुभिः शतवारंईश्वरं इयाज यस्यराज्ये कश्चनपुरुषः आत्मनः
अन्यस्मात्किमपिनवांछति अन्यदीयमपिनावेक्षते सः ऋषभः कदाचित्पृथिव्यांभ्रमन् ब्रह्मावर्तंगतःसन् ब्रह्मर्षिप्रवर
सभायांप्रजानांनिशामयंतीनांज्ञानिनोपिपुत्रान् प्रजानांअनुशासनार्थंउपशिक्षयन्इतिहोवाच १८ इतिपंचमेचतुर्थः
४ ऋषभउवाच हेपुत्रकाः देहभाजामयंदेहः विड्भुजामिवविषयभोगार्थंन नहिं दिव्यंतपः कर्तुंयोग्योस्ति ये
नतपसाअनंतंब्रह्मसुखंभवति किंच विमुक्तेः द्वारं महत्सेवामाहुः योषितांसंगिसंगंतमोद्वारंमाहुः महतांलक्षणमाह ये
समचित्ताः शांताः सर्वसुहृदः विमन्यवःएवंभूताः तेमहांतः अथअयंलोकः यदाइंद्रियप्रीतयेव्याप्रियतेतदापापंकरोति तस्मा
त् दुःखदः देहोभवति यदातुयावत् वासुदेवेप्रीतिंनकरोति तावत् देहेननमुच्यते यदाचप्रमत्तःसन् इंद्रियचेष्टांमिथ्यानपश्य-
ति तदास्वरूपभ्रष्टःसन्मैथुन्यसुखंगृहंप्राप्यतापान्विंदति यदाचअस्यदृढःहृदयग्रंथिःविवेकेनशिथिलोभवति तदास्त्रीपुंरु

ओ॰ १ सेवमानः ओ॰ ४ संसारःप्रद्वारं

प्रमिथुनीभावात् निवर्तते ततः अहंकारं हित्वा मुक्तसंगः सन् परं पदं याति अहंकारत्यागेन साधनानि हंसे गुरौ मयि भक्त्या सर्वत्र वितृ
ष्णया द्वंद्वतितिक्षया परलोके दुःखानुसंधानेन आत्मजिज्ञासया तपसा काम्यकर्मत्यागेन मदर्पणकर्मभिः मत्कथया साधुसंगे
न मद्गुणकीर्तनेन प्राणेंद्रियजयेन सर्वत्र मद्भावनया योगेन च युक्तः सन् अहंकारं व्यपोह्य साधनात् उपरमेत् किंच अहो गुरुर्न सः
स्यात् स्वजनो न सः स्यात् पिता न सः स्यात् जननी न सा स्यात् दैवं न तत् स्यात् न पतिश्च सः स्यात् न मोचयेद्यः समुपेतमृत्युम् १ तस्मा
त् यूयं सर्वे भरतं भजध्वम् किंच जंगमाजंगमप्राणिषु शिव ब्रह्मविष्ण्वं तेषु ब्राह्मणाः श्रेष्ठाः तेषु हुतं अहं यथा अश्नामि तथा
अग्निहोत्रेन किंच सर्वभूतेषु मद्भावना कार्या एतदेव ममार्हणम् पुमान् एवं अर्हणेन विना कृतान् पाशान् आत्मानं विमोक्तुं न सम
र्थो भवेत् श्रीशुकउवाच एवं पुत्रान् अनुशास्य पारमहंस्य धर्मं उपशिक्षाणः भरतं राज्ये अभिषिच्य आत्मनि अग्नी-
न् समारोप्य देहमात्रावशेषितः उन्मत्त इव गगनपरिधानः ब्रह्मावर्तात् प्रवव्राज तत्र तत्र पुरग्रामादिषु दुर्जनैः तर्जनताडनमेहं
नष्ठीवनशकृत् रजः पूतिवातदुरुक्तिभिः पीडितोपि अहं ममतां हित्वा स्थिरमनाः सन् एक एव पृथ्वीं बभ्राम जनानां ग्रहगृहीतव
त् अदृश्यत ततः आजगरं व्रतं आस्थितः शयान एव अश्नाति खादति पिबति मूत्रयति पुरीषं उत्सृजति तस्य पुरीषसुगंधः दशयोजनं
देशं सुवासयति एवं गवादिचर्यया वर्तमानः ऋषभः वासुदेवे आत्मनः अभेदेन स्थितः सन् मध्ये प्राप्ताः अणिमाद्यष्टसिद्धीः त
त्याज ३५ इतिपंचमे पंचमः ५ राजोवाच हे भगवन् आत्मारामाणां योगिनां यदृच्छया उपगतानि ऐश्वर्याणि क्लेशदा
नि न भवंति एवं सति ऋषभः कुतो न गृह्णात् एतत् वद ऋषिरुवाच सत्यमुक्तं भवता अथापि ज्ञानिनः चंचलस्य ३
मनसः विश्वासं न गच्छंति अस्य विश्वासात् बहुकालसंचितं तपः स्रवति तथाहि कामो मन्यु मदो लोभः शोक मोह भयादयः

ओ·२ निरस्य· ओ·७ भयजननं प्रहार उपरिमूत्रणं श्लेष्मप्रक्षेपः अधोवायुः शापः

कर्मबंधश्चमनसोनिमित्तात् भवति एवंभूतंमनःस्वाधीनंजातं इतिकःमन्येत अथसर्वलोकपालश्रेष्ठः भगवान् ऋषभदेवः जड
वत् अवधूतवेषचरितैः अलक्षितस्वभावःयोगिनांदेहत्यागप्रकारंदर्शयन् स्वकलेवरंजिहासुः कौंकवेंककुटकान्दक्षिणकर्ना
टकान् यदृच्छयाप्राप्तःसन् कुटकाचलोपवनेआस्येकृताश्मकवलः उन्मत्तइवमुक्तकेशः नग्नइवविचचार अथसमीरवेगेनवे
णुविकर्षणजातोग्निः तद्वनंसर्वतोग्रसन् ऋषभेनसहवनंददाह अथऋषभाचरितंश्रुत्वातद्देशानां अर्हन्नामराजास्वधर्मअप
हायकुपथपाखंडंस्वबुध्याप्रवर्तयिष्यति येनपाखंडेनतद्देशीयाःजनाः वेदब्राह्मणयज्ञादिविदूषकाः भविष्यंति अयमवता-
रः रजोव्याप्तजनानांमोक्षमार्गशिक्षणार्थः तस्यानुगुणान् श्लोकान् गायंति सप्तसमुद्रवत्याःभुवःद्वीपेषुवर्षेषु भारतंवर्षंअधि
पुण्यंयत्रत्यजनाः मुरारेः ऋषभाद्यवतारयुक्तानिकर्माणिगायंति अहोप्रियव्रतस्यवंशः यशसाशुद्धः यत्रवंशेकृतावतारःपुरु
षः मोक्षधर्मंचचार अपरःयोगी अस्यदिशंकोनाम अनुगच्छेत् एवंपरमगुरोः ऋषभाख्यस्यचरितंसर्वपातकहरंपरममंगला
यनंकथयितुः श्रोतॄणांचवासुदेवेभक्तिः भवति हेराजन् मुकुंदः भजतांमुक्तिंकदाचित् ददाति भक्तिंन यःऋषभः करुणया-
लोकस्य आत्मस्वरूपमाख्यातवान् तस्मैनमोस्तु २० इतिपंचमेषष्ठः ६ श्रीशुकउवाच भरतस्तुमहाभागवतः यदा
स्वपित्राऋषभेणपृथ्वीपालनायनियुक्तः तदातदाज्ञापरोभूत्वापंचजनींविश्वरूपदुहितरंउपयेमे तस्यांसुमतिं १ राष्ट्रभृतं २ सु
दर्शनं ३ आवरणं ४ धूम्रकेतुं ५ इतिपंचपुत्रान्जनयामास किंच यस्यनाम्नापूर्वंअजनाभवर्षंसद्भारतमिति व्यपदिशंति एवंभू
तोराजाभरतः स्वधर्मनिष्ठः प्रजाःपितृवत् पालयामास यज्ञेश्वरंहरिंसर्वैः क्रतुभिःनिष्कामत्वेनईजे किंच एवंप्रवर्तमानेषुयोगे
षु यदपूर्वंक्रियाफलंतत् भगवतिचिंतयन् यज्ञभाजोदेवान् भगवदवयवेषु अभ्यध्यायत् एवंवर्तमानस्य भरतस्य भगवद्भक्तिः

प्रतिदिनंवृद्धिंअगमत् एवंवर्षायुतसहस्रपर्यंतंराज्यंभुक्त्वापुत्रेभ्यः विभज्यसकलसंपत्तिंविहायस्वगृहात् पुलहाश्रमंहरिक्षेत्रं
प्रवव्राज यत्रहरिःअद्यापि तत्रत्यभक्तानांसान्निध्यंददाति यत्राश्रमेउभयतः शालग्रामशिलाभिः पूर्णाचक्रनदीगंडकीसरित् श्रे
ष्ठासर्वतः पवित्रीकरोति तत्राश्रमेविविधकुसुमकिसलयतुलसिकांबुभिः कंदमूलफलोपहारैश्च भगवत्पूजांकुर्वन् भरतः परांनि
र्वृतिमवाप एवंअखंडपूजाभक्तियोगेनशिथिलहृदयःपरमानंदमग्नः सन् क्रियमाणांपूजामपिनसस्मार इत्थंधृतभगवद्व्रतः
ऐणेयाजिनवासाः अनुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापः सन् सूर्येउदितेसति हिरण्मयंपुरुषंउपतिष्ठन् एतदुवाच
सूर्यस्यसर्वकर्मफलदंजगदुत्पत्तिस्थितिसंहारकरंतेजः प्रतिवयंशरणंव्रजामः १३ इतिपंचमेसप्तमः ७ श्रीशुकउवा॰
एकदागंडक्यांकृताभिषेकनैयमिकावश्यकः ब्रह्माक्षरंगृणन् मुहूर्तत्रयंनद्यास्तीरेउपविवेश हेराजन् तत्रएकागर्भिणीहरि
णीपिपासयाजलसमीपेआजगाम तयापेपीयमानेउदकेनदेवसमीपेसिंहस्यभयंकरः शब्दः अभूत् साहरिणीसिंहभयेनप
रिभ्रांतनेत्राअगततृषासहसैवनदींउल्लंघितवती तदाअंतर्वत्न्याः तस्याः उड्डाणसमयेयोनिनिर्गतः गर्भः प्रवाहेनिपपात तद्दुः
खेनआतुरासतीकस्यांचित् पर्वतदर्यांगत्वानिपपातममारच ततः तंहरिणबालकंप्रवाहेणऊह्यमानंवीक्ष्य राजर्षिः भरतः
मृतमातरमिति अनुकंपयास्वाश्रममनयत् तस्मिन्बालकेस्वीयमित्यभिमानेन तत्पालनरक्षणादिनाहरिपूजादिनियमाः श
नैः सर्वेउत्सन्नाः बभूवुः नूनंआर्याः कृपणसुहृदः एवंविधार्थेस्वार्थानपिउपेक्षंते अयंहरिणबालः मामेवमातापित्रादिबुद्ध्याश्रितः
अतोवश्यंमयाअस्यपोषणादिकार्यं एवंतस्मिन् अतिस्नेहानुबद्धमनाः आसीत् कदाचित् कुशकुसुमाद्याहरिष्यमाणः वृकादिभ्योभ ४
यंशंकमानः भवति तदामृगेणसहवनंविशति पथिमुग्धभावेनसक्तंस्कंधेन उद्वहति एवंउत्संगेनिधायलालयन् परमांमुदंआप क

ओ॰५ त्रिकालस्नानेन आर्द्राः धूम्राभ्रवर्णाः वक्रजटास्तासांकलापेन रोचमानः ओ॰७ प्रणवम्॰

दाचित् हे वत्स ते स्वस्ति भूयात् एवमाशीः ददाति एवं तस्मिन् आसक्ते सति सः हरिणबालकः किंचित् प्रौढः सन् पलाय्य गतः तदा हरिण
वियोगेन मोहं प्राप्तः सन् इति होवाच अयं एणबालकः निर्भाग्यस्य मम शाठ्यादिकं न गणयन् एष्यति किम् किंच अस्मिन् आश्रमे को
मल तृणानि चरंतं देवगुप्तं द्रक्ष्यामि किम् अपिच एनं वृकादयः न भक्षयिष्यंति किम् किंच अस्मिन् सूर्येऽस्तमिते सति अयं मे मृगव
धूर्न्यासः एष्यति किम् किंच हरिणराजकुमारः आगत्य मां सुखयिष्यति किम् किंच हरिणराजकुमारः आगत्य मां सुखयिष्यति-
किम् अहो क्रीडायां मां मृदुविषाणाग्रेण संघट्टयति हविषि दूषिते सति मया अधिक्षिप्तः सन् निश्चलः आस्ते इति बहुधा प्रलप्यता
वत् उदिते चंद्रे मृगं दृष्ट्वा स्वमृगत्वं संभावयन्नाह अहो असौ चंद्रः एनं हरिणबालकं वत्सलः सन् पालयति किं एवं अघटमान मनो-
रथाकुलहृदयः स्वारब्धकर्मणा भगवदाराधनलक्षणात् कर्मणः भ्रंशितः अन्यथा जात्यंतरे कथं संगः स्यात् एवं तस्य पोषणपाल
नादिना आत्मचिंतां अकुर्वतः भरतस्य सः कालः प्राप्तः तदानीमपि आत्मजमिव पार्श्ववर्तिनं शोचंतं वीक्ष्य मृगे एव आवेशितमनाः
मनुष्यदेहं हित्वा मृगशरीरं आप पूर्वजन्मानुस्मृतिः तस्य भगवदाराधनात् आसीत् एवं आत्मनः मृगरूपप्राप्तिकारणं ज्ञात्वा तप्य
मानो भरतः आह अहो कष्टं भ्रष्टोऽहं मृगसंगेन भगवदाराधनादित्यादि जातनिर्वेदः मृगीं मातरं विसृज्य पुनः कालंजरात् पुलस्त्या-
श्रममाजगाम तस्मिन्नपि कालं प्रतीक्षमाणः संगात् भीतः एक एव शुष्कपर्णादि भक्षयन् कालेन मृगशरीरं तीर्थोदकक्लिन्नं उत्स
सर्ज २८ इति पंचमेऽष्टमः ८ श्रीशुक उवाच अथ कस्यचित् अंगिरःप्रवरस्य आत्मज्ञानानंदयुक्तस्य द्विजस्य नव पुत्राः ब
भूवुः कनिष्ठभार्यायां मिथुनं च जातम् यः तत्र पुमान् तं परमभागवतं भरतं त्यक्तमृगशरीरं चरमेण शरीरेण विप्रत्वं गतमित्याहुः तत्रा
पि स्वजनसंगात् भीतः सन् भगवच्चरणांबुजं ध्यायन् उन्मत्तजडांध इव लोकस्य आत्मानं दर्शयामास पिता तस्य उपनयनांतान् संस्का

 

रान् कृत्वा पुनः वेदान् अध्यापयिष्यन् सः चतुरो मासान् सावित्रीं अधीयमानमपि पुत्रं प्राप्तमिव अपश्यत् एवं अनधिगतमनोरथः
तस्य पिता कालेन मृतः ततः पत्नी सपत्न्यां मिथुनं न्यस्य पतिलोकं अगात् एवं पितरि मृते सति नव भ्रातरः अतत्प्रभावविदः अयं
जड इति निश्चयं चक्रुः स च द्विपदपशुभिः यदाभिभाष्यमाणः तदा तदनुरूपाणि प्रभाषते किंच याञ्चया परेच्छया वा प्राप्तं बहु अ
ल्पं मिष्टान्नं कदन्नं वा भुंक्ते निरभिमानः कुपटावृतकटिः उरुमषिणोपवीतेन ब्रह्मबंधुरिति संज्ञया अज्ञैः अवमतः सन् विचचा
र यदा भ्रातृभिः केदारकर्मणि आहारप्रलोभेन नियुक्तः सन् तदपि करोति तथापि अत्र कर्दमस्य प्रक्षेपे इदं क्षेत्रं सममं भवेत् इतः
उद्धरणे विषमं स्यात् इति न वेद किंच भ्रातृभिः दत्तकणपिण्याकतुषकीटदष्टमाषदग्धान्नादिकं भक्षयति अथ कदाचित् चोररा
जः अपत्यकामः सन् भद्रकाल्यै पुरुषपशुमालब्धुं प्रवृत्तः ततः बलिदानकाले पलायितस्य पशोः पदवीं गवेषयंतः तद्भृताः अर्द्ध
रात्रसमये तं अप्राप्य अकस्मात् क्षेत्ररक्षणे स्थितं जडभरतं लब्ध्वा रशनया तं बध्वा हर्षेण चंडिकागृहं निन्युः अथ पणयः तं
स्वविधिना अभिषिच्य वस्त्रभूषणलेपस्रक्तिलकादिभिः उपस्कृतं भुक्तवंतं महापूजया पूजितायाः भद्रकाल्याः अग्रे उपवे-
शयामासुः अथ चोरराजपुरोहितः पुरुषपशोः रक्तेन भद्रकालीं यक्ष्यमाणः निशितं खड्गं आददे इति तेषां दुष्टानां अतिदारुणं
कर्म दृष्ट्वा ब्रह्मभूतस्य ब्राह्मणस्य वधं अयोग्यं मन्यमाना तेजोमयेन वपुषा सहसैव प्रतिमां हित्वा बहिर्निर्गता भद्रकाली त
द्भृतान खड्गं प्रगृह्य महानादं कृत्वा पापिष्ठानां सर्वचोराणां शिरांसि छित्वा तेषामसृक् उष्णं असृक् स्वगणैः सह पीत्वा तेषां मस्तकैः स्व-
पार्षदैः सह कंदुकलीलया विजहार एवमेव खलु महदभिचाररूपातिक्रमः कार्त्स्न्येनात्मने फलति तस्मात् निर्भयं विष्णुपदं आश्रि ५
तानां कः हंतुं समर्थो भवेत् २० इति पंचमे नवमः ९ श्रीशुक उवा॰ अथ सिंधुसौवीरपतेः तत्त्वजिज्ञासया कपिलाश्रमं गच्छ

ओ॰५ शालिक्षेत्र कर्दमविलोडनादौ ओ॰८ चोराः

तः रहूगणस्य इक्षुमत्याः तटे शिबिकावाहपुरुषान्वेषणसमये दैवेन प्राप्तः सः द्विजवरः एषः पीवा गोखरवत् धुरं वोढुं अलमितिपूर्व
विष्टिगृहीतैः सह धृतः सन् शिबिकां उवाह यदा द्विजस्य इतस्ततः शरद्भूम्यवलोकनेन गच्छतः सतः किंचित् विषमगतां शिबिकां
उपधार्य रहूगणः आह हे वोढारः साधु गच्छत नेऊचुः हे नरदेव वयं साध्वेव वहामः अयं न इति श्रुत्वा राजा एकस्य दोषः सर्वेषां सां-
सर्गिणां भवितुमर्हतीति निश्चित्य उत्थितमन्युः सन् तमाह हे भ्रातः त्वं निश्चितं श्रांतः यतः दीर्घमार्गं त्वं एक एव प्रापितवान् त्वं नाति-
पीवा दृढ्त्वेन उपद्रुतोसि तच्छ्रुत्वापि पूर्ववत् शिबिकां उवाह पुनः विषमगतायां शिबिकायां प्रकुपितः रहूगणः उवाच अरे किमिदं
त्वं जीवन्मृतः मां कदर्थीकृत्य चरसि अतः यम इव ते चिकित्सां करोमीत्यादि श्रुत्वा ब्राह्मणः योगेश्वरचर्यायां पूर्णः सन् उवाच हे राजन्
त्वयोदितं स्फुटम् स्थौल्यकार्श्यादि जीवन्मृतत्वादि देहस्यैव मे न उन्मत्तवत् स्वस्वरूपं प्राप्तस्य मे भवता शिक्षितेन पिष्टपेषणवत्
व्यर्थेन किं श्रीशुकउवा० इत्युक्त्वा प्रारब्धक्षयं कुर्वन् राजयानमपि उवाह सः रहूगणः तद्धृदयग्रंथिभेदकं द्विजवचः श्रुत्वा
त्वरया अवरुह्य शिरसा पादमूलं प्राप्तः क्षमापयन् विगतगर्वः उवाच हे ब्रह्मन् दत्तात्रेयादीनां मध्ये त्वं कतमः अवधूतोसि नाहं वि-
शंके सुरराजवज्रात् तथा यमस्य दंडात् यथा ब्रह्मकुलावमानात् किंच अज्ञाननाशार्थं कपिलं प्रति गच्छता मया त्वं दृष्टः अतः भ
वान् राजा इति अभिमानेन तुच्छीकृतसत्तमस्य मे कृपां कुरु यथा अहं अज्ञानात् तरिष्यामि तथा क्रियताम् २५ इति पंचमे द
शमः १० ब्राह्मणउवाच हे राजन् त्वं अविद्वानपि ज्ञानीव वादान् वदसि अतः त्वं विदां मध्ये श्रेष्ठो न भवसि यस्मात् लौ
किकव्यवहारं त्वं सत्यं आत्थ ज्ञानिनस्तु मिथ्यात्वेन जानंति हे राजन् कर्मार्जितान् लोकानपि तथैव यावत् पुरुषस्य मनः सुखदुः
खात्मकं कर्म दशेंद्रियैः तनोति तावत् तन्मनः विषयोपरक्तं सत्गुणप्रवाहेण देहान् उत्पादयति सुखं दुःखं च सृजति तस्मात् जंतोः
ओ० १ भारम् ओ० २ शाला०

मनःगुणानुरक्तंव्यसनायभवति निर्गुणंक्षेमाय यथादीपः घृतवर्तिमश्नन् सधूमाःशिखाःभजति घृतक्षयेस्वंरूपंभजति तद्वत् किं
च दशेंद्रियाणि एकादशंमनः द्वादशं अहंकारः एतैःयुक्ताःमायारचिताःकोटिशः देहाःईश्वरात् भवंति इदंसर्वंमायाकृतं हेनरेंद्र दे-
हीयावत् एतांमायांविधूय आत्मतत्वंनवेद तावत् इह भ्रमति किंच आत्मनःउपाधिभूतं संसारतापानांक्षेत्रं इदंमनइतियावत्जीवो
नवेद तावत् भ्रमति तस्मात् हे रहूगण एनं आत्ममोषंमनोरूपंशत्रुंगुरोःहरेःचरणोपासनास्त्रःसन् घातय १७ इतिपंचमेएकादशः
११ रहूगणउवाच हेभगवन् कारणविग्रहायनमः हेअवधूतद्विजलिंगायनिगूढनित्यानुभवाय तेईश्वररूपायनमः अहोरोगा
र्तस्ययथासाधुऔषधंउष्णातप्तस्ययथागंगोदकं तथादेहाभिमानएवसर्पः तेनदष्टस्यमेतेवचः अमृततुल्यंऔषधंभवति अतःअ
ध्यात्मयोगग्रथितंदुर्बोधंतवोक्तंमेयथासुबोधंस्यात् तथा आख्याहि ब्राह्मणउवा० हेपार्थिवअयंजनोनामपृथिव्यांचलन्
सर्वोपिपृथ्वीविकारः यथानामभेदेनअंघ्रिगुल्फजंघाजानुउरुउरः अंसाःअंसेदार्वीशिबिकातस्यांअहंराजाजनस्यगोप्ताअस्मि इ
तित्वंकत्थमानः ज्ञानिनांसमूहे धृष्टःत्वंशोभसेकुतःचराचरस्यप्रभवःनाशश्चेतिपृथिव्यामेव सापृथ्वीपरमाणुरूपातेपरमाणवःभ
गवन्माययाकल्पिताः एवंकृशस्थूलादिद्रव्यस्वभावादिसर्वप्रपंचजातंभेदरूपंकृतमस्ति तस्मात् इदं व्यवहाररूपंसर्वंमिथ्या सत्यंतु
ज्ञानंभगवच्छब्दसंज्ञम् यद्वासुदेवमितिकवयोवदंति हेरहूगणएतत् ज्ञानंपुरुषः तपसायज्ञैः वेदाभ्यासादिनाचनप्राप्नोति तत्तुम
हत्संगेनप्राप्यते ततः अकिंचनाभक्तिर्भवति हेराजन्पुराअहंभरतोनामराजाआसम् ईश्वराराधनंईहमानः मृगसंगात् मृगःअभव
म् मृगदेहेपिकृष्णार्चनप्रभावात् मत्स्मृतिर्नगता अतःअहंजनसंगात्विशंकमानःअप्रकटःचरामि तस्मात् नरःसत्संगलब्धज्ञानासि ६
नाछिन्नमोहःजरामरणादिरूपसंसारमार्गस्यपरंयाति १६ इतिपंचमेद्वादशः१२ ब्राह्मणउवाच हेरहूगणअयंजीवसमूहः

अजयादुरत्यये अध्वनिनिवेशितः सुखार्थेच्छयाभवाटवींयाति यस्यांभवाटव्यांषड्दस्यवः बलात् सार्थस्यधनंमुष्णंति किंच यस्यांगोमायवः प्रमत्तंसार्थिकंहरंति यथावृकाः उरणम् तत्रदंशैः मशकैः उपद्रुतः क्वचित् गंधर्वपुरंपश्यति क्वचित्पिशाचंपश्यति भयात् अटव्यांइतस्ततोधावति कदाचित् दिशः नजानाति क्वचित् उलूकवाग्भिः व्यथितमनाः क्षुधार्दितः सन् मृगजलानि अभिधावति क्वचित् वितोयाः सरितोभियाति क्व० दावंप्राप्य अग्नितप्तः सन् विषीदति क्व० शूरैः हृतधनः शोचन् सन् मूर्च्छांउपयाति क्व० गंधर्वपुरंप्रविश्यमोदते क्वचित् कंटकादिभिः विद्धांघ्रिः सन् नगारुरुक्षुः विमनाइव आस्ते क्षणे क्षणेजठराग्निनादग्धः सन् स्वजनायक्रुध्यति क्व० अजगरसर्पेणगिलितः सन् किंचिन्नावैति क्व० दंदशूकैः दष्टः सन् अंधकूपेपतति क्षुद्ररसान् विचिन्वन् सन् मक्षिकाभिः ताडितः व्यथितोभवति क्व० शीतातपवातवर्षप्रतिक्रियांकर्तुमनीशः आस्ते क्व० मिथोव्यवहरन् वित्तशाठ्यात् द्वेषंऋच्छति क्व० क्षीणधनः शय्यासनादिहीनः सन् अन्यंपुरुषंयाचित्वातत् शय्यादि अप्राप्य अवमानंप्राप्नोति एवंबहुभिः श्रमैः उपसर्गैश्चविपन्नः सन् मृतप्रायोभवति किंच सः मृतान् तत्रतत्रहित्वाजातंजातंपरिगृह्यविहरन् सन् अद्यापिनावर्तते किंच एतेभुविममेयंभूरितिबद्धवैराः संतः युद्धे म्रियंते नतुविष्णुपदंव्रजंति अथपुनः भवाटवींवर्णयति अयंसार्थः क्वचित् सिंहसंघात्त्रसन् बककंकगृध्रैः सहसख्यंकरोति ततः तैर्वंचितः सन् हंसकुलंप्रविशति तत्रापि तच्छीलंअरोचयन् वानरान् उपैति ततः तज्जातिक्रीडयाविस्मृतजीवितावधिर्भवति एवंअमुष्मिन् मार्गेभ्रमन् अद्यापिकश्चननवेद हेरहूगणत्वमपिसर्वभूतमैत्रः न्यस्तदंडः सन् हरिसेवयातीक्ष्णंज्ञानासिंगृहीत्वाअस्यअध्वनः पारंयाहि रहूगणउवाच अहोअखिलजन्मसुमध्येनृजन्मैवश्रेष्ठं किंदेवादिजन्मना नृजन्मनातुसत्समागमोभवति तेनभगवच्चरणेअमलाभक्तिः उत्पद्यते अहोतवमुहूर्तमा

ओ॰२ सृगालाः दारादयः ओ॰२ मेषम्

त्रसंगात् ममअविवेकोगतः किंच ब्रह्मविदः केनरूपेणविचरंति इत्यज्ञानात् सर्वान्नमस्यति महद्भ्यः शिशुभ्यः युवभ्यः बटुभ्यः न-
मः येअवधूतलिंगाः ब्राह्मणाः तेभ्यःनमः राज्ञांशिवमस्तु श्रीशुकउवाच एवंसः ब्रह्मर्षिसुतः करुणयारहूगणाय तत्वंउप-
दिश्यतेनवंदितचरणः पृथ्वींविचचार सौवीरपतिरपिसाधुसंगात् लब्धतत्वज्ञानः अज्ञानेन आत्मनि अध्यारोपितां देहात्मबुद्धिं
विससर्ज एवंहेनृपभगवदाश्रितानुभावः अस्ति परीक्षिदुवाच हे शुकत्वयालोकस्य संसारमार्गः पारोक्ष्येण कथितः
सः सर्वेषांबोधाय प्रत्यक्षेणनिर्दिश्यताम् २६ इतिपंचमेत्रयोदशः १३ श्रीशुकउवाच यएषःजीवलोकः विष्णो
र्माययाभवाटवींगतः सन् भगवद्भक्तैरनुष्ठितं संसारतापोपशमनंशक्तिमार्गं अद्यापिनप्राप्नोति यस्यांभवाटव्यामेतेषडिंद्रि
यनामानः कर्मणादस्यव एवसंति तद्यथापुरुषस्य यत्किंचिद्भगवदाराधनलक्षणधर्मकारणं धनंतत् दर्शनस्पर्शनश्रवणा-
स्वादनावघ्राणैः विषयभोगेनहरंति अथचदारापत्यादयः कर्मणाभ्वसृगालाएवलुब्धस्य कुटुंबिनः सर्वस्वंहरंति यथाक्षेत्रं
कृष्यमाणमपि गुल्मतृणादिभिर्गह्वरं भवति एवमेवगृहाश्रमः कर्मक्षेत्रम् यस्मिन्कर्माणिनोत्सीदंति अत्रवासनानांअक्षी-
णत्वात् तत्रगतःसन् दंशमशकतुल्यैः नीचमनुष्यैः पीड्यमानः अविद्यादिभिरुपरक्तेन मनसागंधर्वपुरतुल्यंनरलोकंसत्यतया
मिथ्यादृष्टिः सन् अनुपश्यति क्वचित् मृगजलतुल्यान् विषयान् व्यसनलुब्धः सन् अनुधावति क्वचित् अशेषदोषस्थानंसुवर्णंउपा
दातुं इच्छति अग्निकामेनउल्मुकपिशाचमिवअग्निबुद्ध्यानुधावति नतुतंप्राप्नोति कथंचित् प्रासश्चेत् तर्हितेन भक्षितः सन् म्रियते
एवंसुवर्णमनुधावन्नपि कदाचित् निवासतोयद्रविणादिष्वभिनिविष्टः एतस्यांसंसाराटव्यांइतस्ततः परिधावति कदाचित् वात्या ७
तुल्ययास्त्रियाउत्संगंआरोपितः रजस्वलाक्षः सन् दिग्देवताः नजानाति कं॰ देहाभिनिवेशेन भ्रंशितमतिः मरीचितोयप्रायान् विष-

ओ·२ जडभरतः

यान् अभिधावति क० उलूकझिल्लीस्वनवत् रिपूणांराजकुलस्यचनिभर्त्सितेनव्यथितकर्णमूलहृदयोभवति क्वचित् अपुण्य वृक्षलताविषोदकपानतुल्यान्जीवन्मृतान्उपधावति क० असतांप्रसंगात् वंचितमतिः निरुदकनदीगर्तपाततुल्यंइहपर त्रचदुःखदंपाखंडमभियाति यदाआत्मनेअन्नंनोपतिष्ठति तदापितृपुत्रान्बाधते क० दावतुल्यंगृहमासाद्यशोकाग्निना दह्यमानःनिर्वेदमुपगच्छति क० कालेनप्रतिकूलतांनीतंयद्राजकुलंतदेवरक्षः तेनापहृताःप्रियतमधनरूपाःप्राणाः यस्यसःमृ तकइवआस्ते क० मनोरथप्राप्तंपित्रादि असत् सदिति मत्वाअनुभवति क० गृहाश्रमेयाःकर्मचोदनास्तासांअतिविस्तारए वगिरिः तंआरुरुक्षन् कंटकशर्कराक्षेत्रंप्रविष्टइवसीदति क० दुःसहेनकायाभ्यांतरवह्निनागृहीतसारः स्वकुटुंबायक्रु ध्यति सएवपुनः निद्राजगरगृहीतः शून्यारण्यइवशेतेनान्यत् किंचनवेद कदाचित्दुर्जनदंदशूकैः भग्नगर्वदंष्ट्रः अंधकूपेंधवत् पतति क० काममधुलवान् विचिन्वन् यदापरदारपरद्रव्याणि अवरुंधानःभवति तदाराज्ञास्वामिभिर्वानिहतःसन्निरयेपतति तस्मात्प्रवृत्तिमार्गेआत्मनः जन्मक्षेत्रंकर्मउदाहरंति यदिबंधात् मुक्तोभवति तर्हितस्मात् देवदत्तोहरति तस्मात्विष्णुमित्रः क० शीतवाताद्यनेकाधिदैविकादिदुःखानांनिवारणेअकल्पोदुरंतचिंतयाविषण्णःआस्ते क० मिथःव्यवहरन् यत्किंचिद् नंअन्येभ्यः काकिणिकामात्रंततोन्यूनंवाअपहरन् विद्वेषंएति अमुष्मिन् अध्वनिइमेसुखदुःखरागद्वेषभयाभिमान- प्रमादोन्मादशोकलोभमोहमात्सर्येर्ष्यावमानक्षुत्पिपासाधिव्याधिजन्ममरणादयःउपसर्गाःसंति क्वापिदेवमाययास्त्रिया भुजलतोपगूढःगतविवेकविज्ञानःकृतदुहितृकलत्रभाषितादिभिःअपहृतहृदयःआत्मानंअपारेऽधेतमसिप्रक्षिपति क० भग वतःविष्णोःकालचक्रात्त्रस्तहृदयःतमेवईश्वरंयज्ञपुरुषंअनादृत्यकंकगृध्रबकतुल्याःपाखंडदेवताःआभिमुख्येनधत्ते यदा-

 

पाखंडिभिर्वंचितः तदाब्रह्मकुलं समावसन् तेषां शीलं श्रौतादिकर्मानुष्ठानेन भगवदाराधनमेव तत् अरोचयन् शूद्रकुलं भजते
यस्य शूद्रस्य मिथुनी भावः उदरभरणं च व्यापारः तत्रापि प्रतिबंधरहितः स्वेच्छया क्रीडन् सन् अन्योन्य मुखनिरीक्षणादिना विस्मृत-
कालावधिर्भवति क्व० द्रुमवत् ऐहिकार्थेषु रंस्यन् वानरवत् मिथुनोत्सवो भवति एवं अध्वनि अवरुंधानः मृत्युगजभयात् गिरिकंद
रप्राये रोगाद्यापदि पतति क्व० शीतं वाताद्यनेकाधिदैविकादि दुःखानां निवारणे असमर्थः सन् विषयविषण्णः आस्ते क्व० क्षीणधनः
शय्यासनाद्युपभोगविहीनः वांछितादानेनिश्चितमतिः सन् ततस्ततः जनात् अवमानादीनि लभते एतस्मिन् संसाराध्वनि यः
आपदं प्राप्तः मृतो वा तं विसृज्य जातं जातं स्वीकृत्य शोचन् मुह्यन् क्रंदन् संहृष्यन् अपि अद्यापि नावर्तते तत्र हेतुः एतद्योगानुशास
नं न जानंति मुनयस्तु समवगच्छंति एवं स्वर्गतोपि नरलोकसार्थमेवोपयाति हे राजन् ऋषभदेवपुत्रस्य भरतस्य मार्ग अन्यः कोपि
नृपः गंतुं न शक्नोति गरुत्मतः मार्गं मक्षिकेव यः युवापि दारसुतसुहृद्राज्यादि जहौ किंच यः क्षितिसुतस्वजनार्थदारादीन् नैच्छत् न
तस्य उचितमेव यतः हरिसेवानुरक्तमनसां महतां मोक्षोपि तुच्छ एव किं पुनरेते यः भरतः मृगदेहमपि त्यक्षन् यज्ञाय नारायणा
य हरये नम इत्युच्चैः सम्यगुच्चारितवान् इदं भागवतैः सत्कृतशुद्धगुणकर्मणः भरतस्य स्वस्त्ययनं आयुष्यं धन्यं यशस्यं स्वर्ग्या
पवर्ग्यं अनुचरितं यः शृणोति श्रावयति अभिनंदति सः सर्वाः आशिषः प्राप्नोति ४४ इति पंचमे चतुर्दशः १४ श्रीशुकउवा·
भरतस्यात्मजः सुमतिर्नामायं सुमतिं ऋषभपदवीमनुवर्तमानं दृष्ट्वा केचित्पाखंडिनः बुद्धोयं अवतीर्ण इति मंस्यंते पाखंडमार्गं
च कलौ कल्पयिष्यंति तस्मात् सुमतेः वृद्धसेनायां देवताजिन्नाम पुत्रः तस्मात् असूर्यां देवद्युम्नः तस्मात् धेनुमत्यां परमेष्ठी त- ८
तः सुवर्चलायां प्रतीहः तस्मात् प्रतीहात् सुवर्चलायां प्रतिहर्ता १ प्रस्तोता २ उद्गाता ३ इति त्रयः पुत्राः आसन् प्रतिहर्तुः स्तुत्यां अजभूमा

नौजातौ भूम्नः ऋषिकुल्यायांउद्गीथः तस्मा द्देवकुल्यायांप्रस्तावः तस्मान्नियुत्सायांविभुः विभोः रत्यां पृथुषेणः तस्मात् आकू
त्यांनक्तः तस्माद्द्रुत्यांगयोनाम भगवदंशः सः महापुरुषतांप्राप्तः सः भगवति समर्पितेन प्रजापालनेज्यादिधर्मेण भक्त्या च शुद्धम
तिः निरभिमान एव अवनिं पालयामास कर्मभिः गयंकः अनुकरोति न कोपि यंदक्षकन्याः अभ्यषिंचन् धरा यस्य प्रजानांकामा-
न्दुदुहे युधि बाणैः पूजिताः नृपाः यस्य बलिं अर्पयामासुः यस्य यज्ञे भगवान्यज्ञेशः भक्तियोगेन समर्पितं इज्याफलं अर्हणमिव
प्रत्यक्षतः स्वीकृतवान् तस्माद्गयं त्यांचित्ररथः सुगतिः अवरोधनः इति त्रयः चित्ररथात् ऊर्णायां सम्राट् ततः उत्कलायांमरीचिः
ततः बिंदुमत्यांबिंदुमान् ततः सरघायांमधुः ततः सुमनस्यांवीरव्रतः ततः भोजायांमंथुप्रमंथू मंथोः सत्यायांभौवनः ततः दूष
णायांत्वष्टा ततः विरोचनायांविरजः ततः विषूच्यांशतजित् प्रवरंपुत्रशतंकन्या एका च जाता प्रैयव्रतमिमं वंशं विरजश्चरमोद्भवः
अकरोदत्यलंकीर्त्या विष्णुः सुरगणं यथा १४ इति पंचमे पंचदशः १५ राजोवाच हे शुक त्वया पूर्वं प्रियव्रतचरिते भू
मंडलायाम विशेषः उक्तः कियत्पर्यंतमुक्तः तदाह यावत् आदित्यः तपति तथा नक्षत्रगणैः सह चंद्रमाः दृश्यते तावत् तत्रापि हे-
भगवन् प्रियव्रतरथचरणपरिखातैः सप्तसिंधव उपक्लृप्ताः येभ्यः एतस्याः भुवः सप्त द्वीपविशेषः त्वया संक्षेपतो दर्शितः एतत्
सर्वमहं मानतः लक्षणतश्च ज्ञातुमिच्छामि यतः भगवतः स्थूलरूपे आवेशितं मनः सूक्ष्मरूपे आवेशितुं क्षमं भवति तस्मात् हे गुरो एतद्व
र्णयितुमर्हसि श्रीशुक उवाच हे महाराज मायागुणविभूतेः भगवतः अंतं पुरुषः विबुधायुषापि प्राप्तुं न समर्थः अतः प्राधान्येन भूगो
लविशेषं नाम लक्षणतो व्याख्यास्यामः यो वा अयं जंबुद्वीपः लक्षयोजनविशालः समः वर्तुलः वलयाकारः एतत्परिमाणेन क्षारोदे
न वेष्टितः अत्र नव वर्षाणि नवसहस्रयोजनायामानि अत्र मर्यादाचलाः अष्ट मध्ये इलावृतं तस्य नाभ्यां लक्षयोजनोच्छ्रायः
ओ॰८ भूषितवान् ओ॰१ विस्तृतानि॰

कर्णिकाकारः सौवर्णः मेरुःस्थितः सः मूर्द्धनि द्वात्रिंशत्सहस्त्रयोजनविततः मूलेषोडशसहस्त्रयोजनविततः अंतर्भूम्यांषोडश
सहस्त्रयोजनैः प्रविष्टःभूमेरुपरि ८४ सहस्त्रयोजनप्रणामः इलावृतस्यउत्तरोत्तरतः नीलःश्वेतःशृंगवान् इतित्रयःपर्वताः एते
रम्यकहिरण्मयकुरुवर्षाणांमर्यादाचलाः अयुतयोजनोच्चाः द्विसहस्त्रयोजनविततः एवंदक्षिणतः निषधः हेमकूटः हिमालयः
हरिवर्षकिंपुरुषभारतानांसीमाचलाः एतेसमुद्रावधयः प्रमाणंपूर्ववत् इलावृतस्यपूर्वेगंधमादनः भद्राश्ववर्षस्यमर्यादागि
रिः पश्चिमेमाल्यवान् केतुमालवर्षस्यसीमाचलः मेरोः चतुर्दिक्षुमंदरमेरुमंदरसुपार्श्वकुमुदाः ४ अवष्टंभपर्वताः दशसह
स्त्रयोजनविस्तारोन्नाहाः एषुचतुर्षुउपरिचूतजंबुकदंबवटाः एकादशशतयोजनोच्छ्रायाः शतयोजनविस्ताराः संति तत्र-
ह्रदाः चत्वारः पयोमध्विक्षुरसमृष्टजलाः संति तत्रदेवोद्यानानि नंदनं १ चैत्ररथं २ वैभ्राजकं ३ सर्वतोभद्रमिति ४ एषुदेवादयः
स्त्रीभिःसहविहरंति मंदरोत्संगेआम्रवृक्षस्यशिरसः गिरिशिखरवत् स्थूलानिफलानिपतंति तद्रसेन अरुणोदानामनदीपू
र्वेणइलावृतंउपप्लावयति यस्याःजलपानतः पार्वतीदासीनांदेहगंधः दशयोजनानि अनुवासयति एवंमेरुमंदरोत्संगेजंबुवृक्षः
तस्मात् इभकायसमानिफलानि पतंति तद्रसेनजंबूनामनदीदक्षिणेन इलावृतंव्याप्यवहति तत्तटस्थमृत्तिकाजांबूनदंसुवर्णं
स्यात् तत्सुवर्णंविबुधादयःस्त्रीभिःसहअलंकाररूपेणधारयंति एवंपश्चिमेसुपार्श्वेपर्वतेकदंबकोटरेभ्यः निःसृतपंचमधुधा
राःपश्चिमेनइलावृतंवर्षयांति यद्रससेवितानांमुखवायुः शतयोजनंसुवासयति एवंकुमुदेवटस्यस्कंधेभ्यः दधिमधुघृतपयोगु
डान्नाद्यंबरशय्यासनाभरणादयः सर्वेएवकामदुघाः नदाःपतंतःसंतः उत्तरेणइलावृतंप्लावयंति नदसेविनांवलीपलितक्लमस्वेदादयोन
भवंति एवंकुरंगकुररकुसुंभाः ३ वैकंकः ४ त्रिकूटः ५ शिशिरः ६ पतंगः ७ रुचकः ८ निषधः ९ शिनीवासः १० कपिलः ११ शंखः १२ वैडूर्यः १३

जारुधिः १४ हंसः १५ ऋषभः १६ नागः १७ कालंजरः १८ नारदः १९ आदिः २० एते पर्वताः मेरोर्मूले रचिताः मेरोः परितः अष्टौ पर्वताः जठरदेवकूटौ पूर्वस्याम् पवनपारियात्रौ पश्चिमतः कैलासकरवीरौ दक्षिणतः त्रिशृंगमकरौ उत्तरतः एवंभूतो मेरुश्च कास्ति मेरोः मूर्धनि मध्ये सौवर्णी दशसहस्रयोजना चतुरस्रा ब्रह्मपुरी तामनुपरितः अष्टौ लोकपालानां पुर्यः सार्द्धद्विसहस्रयोजनमिताः संति ३० इति पंचमे षोडशः १६ श्रीशुक उवाच अथ विष्णोः श्रीवामनस्य वामपादांगुष्ठनखनिर्भिन्नोर्ध्वांडकटाहविवरेणांतः प्रविष्टाया बाह्यजलधारा भगवच्चरणस्पर्शात् सर्वपापहरा सा बहुकालेन ध्रुवमंडले अवततार यां भगवत्पदीमित्याहुः अहो ध्रुवोपि परमभागवतो भगवद्भक्तियोगेन क्लिद्यमानांतर्हृदयः सन् अस्मत्कुलदेवताचरणारविंदोदकमिति यां गंगां शिरसा बिभर्त्ति ततः सप्तर्षयः तत्प्रभावाभिज्ञाः भगवति वासुदेवे संतत भक्तियोगलाभेन उपेक्षितान्यपुरुषार्थाः संतः मुक्तिमिवागतां यां अद्यापि जटाजूटैः बिभ्रति ततः सा चंद्रमंडलं आप्लाव्य ब्रह्मसदने पतिता सती चतुर्धा अभूत् सीता अलकनंदा चक्षुर्भद्रा इति ४ तत्र सीता ब्रह्मसदनात् केसराचलादिपर्वतेभ्यः अधोधः पतंती गंधमादनमूर्द्धनि पतित्वा भद्राश्ववर्षं गत्वा पूर्वसमुद्रं प्रविशति एवं चक्षुः माल्यवच्छिखरात् पतंती केतुमालवर्षं गत्वा पश्चिमसमुद्रं प्रविशति भद्रा च ब्रह्मसदनात् पतिता कुरून् गत्वा उत्तरसमुद्रं प्रविशति एवं अलकनंदा ब्रह्मसदनात् पतंती भारतं गत्वा दक्षिणसमुद्रं प्रविशति यस्यां स्नानार्थं गच्छतः पुंसः पदे पदे अश्वमेधराजसूयादीनां फलं न दुर्लभमिति अन्ये च नदा नद्यश्च वर्षे वर्षे संति बहुशः मेर्वादिगिरिदुहितरश्च शतशः तत्रापि [illegible] तमेव वर्षं कर्मक्षेत्रं अन्यानि अष्ट वर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमस्वर्गपदानि व्यपदिशंति तत्रापि भारतं वर्षं विना अन्यवर्षे पुरुषाणां परमायुः अयुतं वर्षाणि तत्र त्रेतायुगसमः कालो वर्तते यत्र देवादयः स्वैः स्वैः गणनायकैः कृतमहोपचाराः संतः कुसुमस्तबकफलादीनां समृ-

ध्यानमग्नशारवैर्वृक्षैः शोभमानकाननेषु आश्रमायतनवर्षगिरिद्रोणीषु तथा राजहंसजलकुक्कुटकारंडवसारस चक्रवाकादिभिरुपकूजि
तेषु अमलजलाशयेषु स्फललित स्फर सुंदरीणां कामेन क्षुभितैः विलासादिभिः आकृष्टमनोदृष्टयः स्वैरं विरहंति नवस्वपि वर्षेषु भगवा-
न्नारायणः पुरुषाणामनुग्रहाय स्वमूर्तिव्यूहेन आस्ते इलावृत्तेतु एक एव पुमान् शिवः भवान्यासह विहरति यत्र प्रविशतः अन्यपुरुषस्य
स्त्रीत्वंजायते तत् नवमस्कंधे वक्ष्यामि भवान्याः दास्यः अर्बुदसहस्रैर्मिताः संति ताभिर्युक्तः शिवः विष्णोः तुरीयां संकर्षणसंज्ञां मूर्तिं
सेवतेस्तौति ओंनमो भगवते महापुरुषाय अनंताय नम इति मंत्रंजपति हे भगवन् भक्तानां भवापहं त्वां भजे इत्यादि विलयोदयात्मने तु
भ्यंनमः २५ इति पंचमे सप्तदशः १७ श्रीशुक उवाच तथाच भद्राश्ववर्षे भद्रश्रवानाम धर्मसुतः भगवतः हयग्रीवमूर्तिं सेवते
ओंनमो भगवते धर्मायेत्यादि अहो भगवद्विचेष्टितं विचित्रं युगांते वेदान् दैत्येन नीतान् रसातलात् आनीय ब्रह्मणे ददौ तस्मै सत्यसं-
कल्पाय ते नम इत्यादि स्तुतिं करोति अथ हरिवर्षे भगवान् नरहरिरूपेणास्ते तं प्रह्लादः तद्वर्षपुरुषैः सह उपास्ते ओंनमो भगवते नृसिं
हायेत्यादि मंत्रंजपति विश्वस्य स्वस्ति अस्तु नः मतिः अधोक्षजे प्रविशतां नः संगः भगवत्प्रियेषु भवतु तस्मात् नृसिंहपादं भजते इ-
ति स्तुतिं करोति केतुमाले भगवान् कामदेवरूपेण आस्ते तं रमादेवी उपास्ते ओं ह्रां ह्रीं ह्रूं ओंनमो भगवते हृषीकेशायेत्यादि मंत्रंजप
ति स्त्रियः त्वां व्रतैः आराध्य अन्यं पतिं प्रार्थयंति तत् व्यर्थं यतः अकुतोभयं भवति स एव पतिः प्रार्थ्यः एवंभूतस्त्वमेवासि हे ईश्वर
तव इच्छां ज्ञातुं कः समर्थः इत्यादि स्तौति रम्यकवर्षे मत्स्यरूपेण भगवान् आस्ते तं वैवस्वत मनुः आराधयति ओंनमो भगवते मु-
ख्यतमायेत्यादि जपति भगवान् युगांतार्णवे इमां पृथ्वीं मया सह अपात् तस्मै मत्स्याय नम इत्यादि स्तौति तथा हिरण्मयवर्षे भग १०
वान् कूर्मरूपेण आस्ते तं पितृगणाधिपतिः अर्यमा उपास्ते ओंनमो भगवते अकूपारायेत्यादि मंत्रंजपति इदं सर्वं चराचरं ब्रह्मां-

इसहितंत्वद्व्यतिरिक्तंनास्ति यस्मिन् त्वयिकविभिः इदंनामरूपभेदेनबहुधाकल्पितम् तत्वदृष्ट्याएकएव एवंभूताय सांख्यनि
दर्शनायतेनमइत्यादिस्तौति तथाउत्तरेषुकुरुषुभगवान् वराहरूपेणआस्ते तंपृथ्वीदेवीभक्त्याउपधावति ओंनमोभगवते-
मंत्रतत्वलिंगाययज्ञक्रतवेनमइत्यादिजपति यस्यतवस्वरूपंकवयःअग्निरिवमथित्वाजानंति किंच युद्धेहिरण्याक्षंमथित्वा
मांदंष्ट्राग्रेधृत्वारसातलात् यःनिरगात् तंविभुंप्रणतास्मि ३९ इतिपंचमेऽष्टादशः १८ श्रीशुकउवाच अथकिंपुरु
षेवर्षेभगवान् श्रीरामचंद्ररूपेणास्ते तंहनूमानुपास्ते ओंनमोभगवतेउत्तमश्लोकायेत्यादिजपति यत् एकंवेदांतेषुप्रसिद्धंअना
मरूपंतत्वंअहंप्रपद्ये किंच अयोध्यावासिनःजनान् यःस्वर्गंनिनाय तंमनुजाकृतिंरामंभजेइत्यादिस्तौति तथाभारतेऽपिवर्षेभ
गवान् नरनारायणाख्यःआस्ते आत्मवतांअनुग्रहायतपश्चरंति तंभगवान्नारदः भारतीभिः प्रजाभिःसहसेवते ओंनमोभगवते
उपशमशीलायेत्यादिजपति यःविश्वस्यसर्गादिषुकर्तापि अहंकर्ताइतिनमन्यते किंच देहगतोपिक्षुधादिभिर्नहन्यते तस्मै
नमः हेप्रभोत्वयिनःयोगंविधेहीत्यादिस्तौति अस्मिन्वर्षेबहवःसरिच्छैलाःसंति तेचमलयः १ मंगलप्रस्थः २ मैनाकः ३ त्रिकूटः ४
ऋषभः ५ कूटकः ६ कोल्लकः ७ सह्यः ८ देवगिरिः ९ ऋष्यमूकः १० श्रीशैलः ११ वेंकटः १२ महेंद्रः १३ वारिधारः १४ विंध्यः १५ शुक्तिमान् १६ ऋ
ष्यगिरिः १७ पारियात्रः १८ द्रोणः १९ चित्रकूटः २० गोवर्द्धनः २१ रैवतकः २२ ककुभः २३ नीलः २४ गोकामुखः २५ इंद्रकीलः २६ कामगिरिरि
ति २७ अन्येशतशःसहस्रशः शैलाः तेषांनितंबप्रभवाः नदाःनद्यश्च असंख्याताः तत्रमहानद्यः चंद्रवशा १ ताम्रपर्णी २ अवटोदा ३
कृतमाला ४ वैहायसी ५ कावेरी ६ वेणी ७ पयस्विनी ८ शर्करावर्ता ९ तुंगभद्रा १० कृष्णा ११ वेणा १२ भीमरथी १३ गोदावरी १४ निर्विं-
ध्या १५ पयोष्णी १६ तापी १७ रेवा १८ सुरसा १९ नर्मदा २० चर्मण्वती २१ सिंधुः २२ अंधशोणौनदौ २ महानदी २३ वेदस्मृती २४

ऋषिकुल्या २५ त्रिसामा २६ कौशिकी २७ मंदाकिनी २८ यमुना २९ सरस्वती ३० दृषद्वती ३१ गोमती ३२ शरयू ३३ रोधस्वती ३४ सप्तव
ती ३५ सुषोमा ३६ शतद्रू ३७ चंद्रभागा ३८ मरुद्वृधा ३९ वितस्ता ४० असिक्नी ४१ विश्वा ४२ इति महानद्यः अस्मिन्वर्षेजनैः कृतकर्मणादि
व्यमानुषनारकगतयोमोक्षश्च भवति स्वर्गेदेवाः एतत् गायंति अहो एभिर्जनैः किंसुकृतं कृतं येषांहरिः स्वयंप्रसन्नो भवति नः दुष्क
रैः क्रतुतप आदिभिः किम् यत्र नारायणपादस्मृतिर्न नः कल्पायुषामपि पुनर्भवात् भारते वर्षे तत्र क्षणायुषो वरम् यतः क्षणात् सर्वं त्य
क्त्वा हरेः पदंयांति अयंइंद्रलोकोपि न सेव्यताम् कुतः यत्र विष्णुकथा न भारते नृजातिं प्राप्य ये मोक्षायन यतेरन् ते बंधनं यांति नः स्वर्ग
सुखावशेषितं पुण्यं चेत् तर्हि भारते खंडे जन्मास्तु यत्र हरिः भजतां शं तनोति श्रीशुक उवाच हे राजन् जंबुद्वीपस्य अष्टौ उप-
द्वीपानि सगरात्मजैः अश्वान्वेषणे पृथ्वीं खनद्भिः कल्पितानि यथा स्वर्णप्रस्थः १ चंद्रशुक्लः २ आवर्तनः ३ रमणकः ४ मंदरहरिणः ५ पांच
जन्यः ६ सिंहलः ७ लंकेति ८ एवं तव हे भारतोत्तम जंबुद्वीपवर्षविभागो यथोपदेशं उपवर्णितइति ३१ इतिपंचमे एकोनविंशः १९

ऋषिरुवाच अतः परं प्लक्षादि द्वीपानां प्रमाणलक्षण संस्थानतो वर्षविभागः उपवर्ण्यते जंबुद्वीपोऽयं लक्षयोजनपरि-
माणः तावता क्षारोदधिना परिवेष्टितः एवं पूर्वस्मात् उत्तराः द्विगुणाः अतः परं द्विलक्षयोजनमितो प्लक्षद्वीपः तावन्मानेन इक्षुर
सोदेन वेष्टितः तत्रापि द्वीपाख्याकरः जंबुप्रमाणः प्लक्षः अस्ति तत्र हिरण्मयः अग्निः तिष्ठति तस्य अधिपतिः प्रियव्रतपुत्रः इ-
ध्मजिव्हः सः स्वद्वीपवर्षाणि सप्तधा विभज्य वर्षनामभ्यः पुत्रेभ्यः अदात् स्वयं च योगेन उपरराम वर्षपुत्रनामानि शिवं यवसं
सुभद्रं शांतं क्षेमं अमृतं अभयमिति वर्षाणि तेषु वर्षेषु गिरयः नद्यश्च सप्तैव मणिकूट वज्रकूटेंद्रसेन ज्योतिष्मान् सुपर्ण
हिरण्यष्ठीव मेघमालाइति सप्तगिरयः अरुणा नृमणा आंगिरसी सावित्री सुप्रभाता ऋतंभरा सत्यंभरा एवं सप्त महानद्यः या

सांजलस्पर्शेन विधूतरजस्तमसः हंसः पतंगः ऊर्ध्वायनः सत्यांगः एते चतुरो वर्णाः सहस्रायुषः तेत्रय्या विद्यया सूर्यरूपं हरिं-
भजंते प्लक्षादिषु पंचस्र पुरुषाणां आयुः इंद्रियं ओजः सहः बलं पराक्रमः सर्वेषां औत्पत्तिकी सिद्धिर्वर्तते अतः परं शाल्मलद्वी
पः पूर्वस्मात् द्विगुणः तावन्मानेन सुरोदेन वेष्टितः यत्र शाल्मली वृक्षोस्ति द्वीपाख्याकरः यस्मिन् गरुडनिलयमाहुः तद्द्वीपपतिः
प्रियव्रतपुत्रो यज्ञबाहुः स्वंद्वीपं सप्तधा कृत्वा पुत्रेभ्यः अदात् सुरोचनं सौमनस्यं रमणकम् देववर्षं पारिभद्रं आप्यायनम् अ
विज्ञातं ७ तत्र पर्वताः ७ स्वरसः शतशृंगः वामदेवः कुंदः कुमुदः पुष्पवर्षः सहस्रश्रुतिः ७ नद्यश्च सप्त ७ अनुमतिः सिनीवाली स
रस्वती कुहूः रजनी नंदा राकेति तद्वर्षपुरुषाः श्रुतधरः वीर्यधरः वसुंधरः इषंधरः भगवंतं सोमं वेदेन यजंते ततः कुशद्वीपः अष्ट
लक्षयोजनः तावता घृतोदेन आवृतः तत्र द्वीपाख्याकरः कुशस्तंबोस्ति यत्र द्वीपपतिः प्रियव्रतपुत्रो हिरण्यरेताः स्वंद्वीपं स-
प्तधा कृत्वा पुत्रेभ्यः अदात् वसु १ वसुदान २ दृढरुचि ३ नाभिगुप्त ४ स्तुत्यव्रत ५ विविक्त ६ वामदेवा ७ इति तत्र सीमाचलाः स
प्त चक्रः १ चतुःशृंगः २ कपिलः ३ चित्रकूटः ४ देवानीकः ५ ऊर्ध्वरोमा ६ द्रविण इति ७ नद्यः ७ रसकुल्या १ मधुकुल्या २ मित्रविंदा ३
श्रुतविंदा ४ देवगर्भा ५ घृतच्युता ६ मंत्रमाला ७ इति तत्र वर्णाः कुशः १ कोविदः २ अभियुक्तः ३ कुलकसंज्ञ इति एते अग्निरूपं देवं
यजंते ततः षोडशलक्षयोजनः क्रौंचद्वीपः तावता क्षीरोदेन आवृतः यत्र क्रौंचपर्वतो द्वीपाख्याकरोऽस्ति तत्रापि प्रियव्रत पुत्रः
घृतपृष्ठः स्वंद्वीपं सप्तधा विभज्य पुत्रेभ्यः अदात् आमः १ मधुसहः २ मेघपृष्ठः ३ सुधामा ४ भ्राजिष्ठः ५ वनस्पतिः ६ लोहितार्णः ७ इति
तत्र सीमाचलाः ७ शुक्लः १ वर्धमानः २ भोजनः ३ उपबर्हणः ४ नंदः ५ नंदनः ६ सर्वतोभद्र इति ७ नद्यः ७ अभया १ अमृतौघा २ आर्यका
३ तीर्थवती ४ रूपवती ५ पवित्रवती ६ शुक्ला इति ७ तत्र वर्णाः ४ पुरुषः १ ऋषभः २ द्रविणः ३ देवकः ४ इति ते च सदा वरुणं देवं अं

जलिनायजंते ततःशाकद्वीपः द्वात्रिंशत् लक्षयोजनः तावन्मानेन दधिमंडोदेन आवृतः यत्रशाकवृक्षः द्वीपाख्याकरोस्ति तत्रापि
प्रियव्रतपुत्रोमेधातिथिः स्वंद्वीपंसप्तधा कृत्वा पुत्रेभ्यः अदात् पुरोजवः१ मनोजवः२ पवमानः३ धूम्रानीकः४ चित्ररेफः५ बहुरूपः६
विश्वधारः७ इति तत्रसीमापर्वताः७ ईशानः१उरुशृंगः२बलभद्रः३ शतकेसरः४ सहस्रस्रोतः५ देवपालः६ महानसइति नद्यः७अ
नघा१ आयुर्दा२ उभयस्पृष्टिः३ अपराजिता४ पंचपदी५सहस्रस्रुतिः६ निजधृतिः७ इति तद्वर्षपुरुषाः४ ऋतव्रत१ सत्यव्रत२ दा-
नव्रत३ अनुव्रताः४ वाय्वात्मकंभगवंतंसमाधिनायजंते ततःपुष्करद्वीपः चतुःषष्टिलक्षयोजनः तावतास्वादुजलोदेनावृतः तत्र
बृहत्पुष्करं कमलासनस्य आसनं परिकल्पितं तत्द्वीपमध्ये मानसोत्तरनामा एकः शैलः अयुतयोजनोच्छ्रायः यत्रचतुर्दिक्षु
इंद्रादीनांचतस्रः पुर्यःसंति तदुपरिसूर्यरथचक्रंभ्रमति यत्रप्रियव्रतपुत्रोवीतिहोत्रः स्वंद्वीपंद्विधाविभज्यरमणकधातकिना
मभ्यांपुत्राभ्यांददौ स्वयंचभगवत्कर्मशीलः आस्ते तत्रपुरुषाः ब्रह्मरूपंदेवंयजंते श्रीशुकउवाच ततःशुद्धोदात्प
रतः लोकालोकपर्वतः अस्ति यावन्मानसोत्तरमेर्वोरंतरं कोटि१ लक्ष७ तावती भूमिः शुद्धोदात्परास्ति तत्रप्राणिनोपिसंति
ततः आदर्शतलोपमाकांचनीभूः अन्यास्ति साच एकोनचत्वारिंशत् लक्षोत्तर कोट्यष्टकमिताप्राणिवर्जिताचज्ञेया ततः लो
कालोकपर्वतः सःलोकत्रयस्यमर्यादारूपः ईश्वरेणविहितः तेनप्रतिबंधकेनसूर्यादिज्योतिर्गणानांगभस्तयः अर्वाचीनाः ध्रुवपदा
दपिउच्छ्रितःसचमेरोः एकतः सार्द्धद्वादशकोटिमितः अन्यतश्चतावान् तदुपरिचतुर्दिक्षुद्विरदपतयः ऋषभः पुष्करचूडः वामनःअ
पराजितइति एतेलोकस्थितिहेतवःसंति तस्मिन्पर्वतेलोकरक्षणाय आकल्पंभगवान् आस्ते एतेनत्र्यलोकपरिमाणंचव्याख्यातम् त
तः लोकालोकात् अलोकाद्वापरतः योगेश्वराणांविशुद्धांगतिंद्विजपुत्रानयनेर्जुनस्यश्रीकृष्णेनदर्शितामुदाहरंति अंडमध्य-

गतः सूर्योद्यावाभूम्योर्यदंतरम् सूर्यांडगोलयोर्मध्ये कोट्यः स्युः पंचविंशतिः सूर्येणहि विभज्यंते दिशः खं द्यौर्मही भिदा स्वर्गा
पवर्गनरकरसौकांसि च सर्वशः देवतिर्यङ्मनुष्याणां सरीसृप खगवीरुधाम् सर्वजीवनिकायानां सूर्य आत्मा दृगीश्वरः ४६
इति पंचमेविंशः २० श्रीशुकउवाच एतावानेव भूवलयस्य सन्निवेशो व्याख्यातः एतेनहि दिवो मंडलमानं तद्विदः उपदि
शंति यथाद्विदलयोः निष्पावादीनां तदुभयसंधितं अंतरिक्षं ज्ञेयम् अंडमध्यगतः सूर्यः त्रिलोकीं अवभासयति तपति च सः सौ
म्ययाम्यायनविषुवसंज्ञाभिः मांद्यशैघ्र्यसमानाभिः गतिभिः उच्चनीचसमस्थानेषु प्राप्तः सन् मकरादिषु राशिषु अहोरात्रा-
णि दीर्घह्रस्वसमानतया विधत्ते तत्र यदा वृषभादिषु पंचराशिषु चरति तदा अहानि वर्द्धंते ह्रसति च मासि मासि एकैका घटिका
रात्रिषु यदा वृश्चिकादि पंच सञ्चरति तदा अहानि न्यूनानि रात्रयोऽधिकाः भवंति यदा मेषतुलयोर्वर्तते तदा दिनरात्रयः समाना भवं
ति किंच मेरोः पूर्वतः मानसोत्तरपर्वते देवधानी नाम ऐंद्री पुरी वर्तते दक्षिणतो याम्या संयमनी पश्चात् वारुणी निम्लोचनी उत्तरतः
सौम्या विभावरी तासु उदयमध्याह्नास्तमयनिशीथानि उपदिशंति मेरुस्थानां तु सदैव मध्यान्हः किंच नक्षत्राभिमुखतया-
स्वगत्या मेरुं वामतः कुर्वन्नपि चक्रगतिवशात् प्रत्यहं दक्षिणतः करोति यत्रोदेति तस्य समानसूत्रनिपाते अस्तं याति यत्र मध्या-
ह्नं करोति तत्समानसूत्रनिपाते निशीथं करोति यदा इंद्रपुर्याः प्रचलति सूर्यः तदा पंचदशघटिकाभिः संयमनीं पादोनत्रयोदशल-
क्षयोजनाधिकं सपादकोटिद्वयं योजनानि याति एवं वारुणीं सौम्यामैंद्रीं च तथान्ये सोमादिग्रहाः नक्षत्रैः सह ज्योतिश्चक्रे उद्यंति नि
म्लोचंति एवं सूर्यरथः मुहूर्तेन अष्टशताधिकचतुस्त्रिंशल्लक्षयोजनानि चतसृषु पुरीषु परिवर्तते यस्यैकं चक्रं संवत्सरात्मकं समाम
नंति तस्य रथस्य अक्षः मेरुमूर्द्धनि कृतोत्तरभागः मानसोत्तरे कृतेतरभागः यत्र प्रोतं रविरथचक्रं तैलयंत्रवत् मानसोत्तरगिरौ परिभ्रम

ओ॰३, २ कोटि ३७ लक्ष॰ ७५ सहस्र॰ ओ॰ १ अद्याक्षमानम् १५७५००००

ति तस्मिन् अक्षेकृतमूलः द्वितीयोक्षः सार्द्धसप्तत्रिंशत् सहस्राधिकैकोनचत्वारिंशत् लक्षयोजनसंमितः तैलयंत्राक्षवत् ध्रुवेकृतो
परिभागः अस्ति रथनीडस्तु षट्त्रिंशल्लक्षयोजनायतः नवलक्षयोजनविशालः तावान् रविरथयुगः यत्रसप्ताश्वाः छंदोनामानः सू
र्यंवहंति यत्ररथेअरुणः सारथिःआस्ते तथावालखिल्याः ऋषयः षष्टिसहस्रमिताः सूर्यंस्तुवंति तथान्येमुनिगंधर्वाप्सरसोनागा
ग्रामण्योयातुधानाः देवाः प्रतिमासि सूर्यंउपासते एवंएकपंचाशन्लक्षाधिकनवकोटियोजनं भूवलयस्यमंडलंतस्यमंडलस्यक्ष
णेनसः सूर्यः गव्यूत्युत्तरद्विसहस्रयोजनानिभुंक्ते १९ इतिपंचमेएकविंशः २१ राजोवाच यदेतद्भगवतः आदित्यस्यमेरुंध्रुवं
चप्रदक्षिणंपरिक्रामतः राशीनामभिमुखं अप्रदक्षिणंचलितमुपवर्णितंतद्वयंकथंजानीमः सहोवाच यथाकुलालचक्रेणभ्र-
मतासह भ्रमतांपिपीलिकादीनां अन्यैवगतिः एवंकालचक्रेणभ्रमतांतदाश्रयाणां सूर्यादीनांगतिः अन्यैव सएवनारायणः वेदरूपः
द्वादशधाभूत्वालोकानांस्वस्तये ऋतुगुणान् विदधाति जनाः तंत्रैयाविद्ययावर्णाश्रमाचारपराः यजंतः श्रेयांसि प्राप्नुवंति सचद्या
वापृथिवीमध्यस्थकालचक्रगतः सूर्यः यावताद्वादशमासान् भुंक्ते पक्षद्वयंमासः चांद्रमानेन सपादमहानक्षत्रद्वयंसौरेण अहोरात्रं
पित्र्येणेति उपदिशंति यावताषष्ठंअंशंभुंजीत सऋतुः यावता अर्द्धंभुंक्ते तदयनं यावतानभोमंडलंकार्त्स्न्येन भुंजीत तंकालंसंवत्स
रंपरिवत्सरं इडावत्सरं अनुवत्सरं वत्सरमित्याहुः ततः सूर्योपरिचंद्रमाः लक्षयोजनतः उपलभ्यमानः अर्कस्यवत्सभुक्तिंपक्षाभ्यांमा
सभुक्तिं सपादर्क्षाभ्यांदिनेनैव पक्षभुक्तिं द्रुततरगमनोभुंक्ते अथ आपूर्यमाणकलाभिः अमराणां क्षीयमाणाभिः पितॄणांअहो-
रात्राणिकरोति यएषभगवान् अन्नमयोऽमृतमयः देवादिपिपीलिकांतानां आप्यायनशीलत्वात्सर्वमयइतिवर्णयंति तदुपरित्रिल
क्षयोजनांतरे नक्षत्राणि ततउपरिद्विलक्षयोजने शुक्रः उपलभ्यते सः अर्कस्याग्रेपश्चात् सहैववाचरति लोकानांनित्यदाअनुकूलः १३

ओ·१. ३९ लक्ष ३७ स· ५ श. ओ·२ उपवेशस्थानम्·

ततउपरिष्टात्द्विलक्षयोजनेबुधः प्रायःशुभकृत् यदाअर्कात्वियुज्येततदा अनावृष्ट्यादिभयंसूचयते ततउपरिष्टात् द्विलक्षयोजने अंगारकः प्रायोदुःखदः ततउपरिष्टाद्विलक्षयोजने भगवान् बृहस्पतिः प्रायेण अनुकूलोब्राह्मणकुलस्य एकैकस्मिन् राशौ-यदिनवक्रः तर्हिवत्सरंचरति ततःद्विलक्षयोजने शनैश्चरः प्रतिराशौत्रिंशन्मासान् भुंक्ते प्रायःसर्वेषां अशांतिकरः ततउपरिएकादशलक्षयोजनांतरेसप्तर्षयः लोकानांशमिच्छंतः भगवतःविष्णोःपरंपदंप्रदक्षिणंप्रक्रमंति १७ इतिपंचमेद्वाविंशः २२ श्रीशुकउवाच अथतस्मात्परतः त्रयोदशलक्षयोजनांतरेविष्णोःपरमंपदंवदंति यत्रमहाभागवतः ध्रुवोस्ति तदनुभावःपूर्वउक्तः चक्रेण भ्राम्यमाणानांग्रहनक्षत्रादीनांस्थाणुरिव आश्रयोस्ति यथाचमेढीस्तंभेयोजिताःपशवः तथा एतेग्रहनक्षत्रादयः कालचक्रयोजिताः वायुनाप्रेर्यमाणाः तंपरिभ्रमंति यथाचनभसिवायुवशाः मेघाः पक्षिणश्चपरिवर्तंते एवंप्रकृतिपुरुषानुगृहीताः ज्योतिर्गणाः कर्मनिर्मितगतयः भुविनपतंति केचित् एतत्ज्योतिश्चक्रंशिशुमारसंस्थानेनवासुदेवस्ययोगधारणायांस्थितमिति अनुवर्णयंति यस्यअवाक्शिरसः कुंडलीभूतदेहस्य पुच्छाग्रे ध्रुवः तदधः प्रजापतिधर्माग्नींद्राश्च पुच्छमूलेधाताविधाताच कट्यांसप्तर्षयः दक्षिणपार्श्वे अभिजिदादीनिनक्षत्राणि १४ वामपार्श्वेपुष्यादीनि १४ पृष्ठेअजवीथी उदरे आकाशगंगा पुनर्वसुपुष्यौदक्षिणवामश्रोण्योः आर्द्राश्लेषेपश्चिमदक्षिणवामपादयोः अभिजिदुत्तराषाढेदक्षिणवामयोः नासिकयोः श्रवणपूर्वाषाढेदक्षिणवामनेत्रयोः धनिष्ठामूलेदक्षिणवामकर्णयोः मघादीनिअष्टवामपार्श्ववंक्रिषु तथैवमृगशीर्षादीनि अष्टदक्षिणवामपार्श्ववंक्रिषुप्रातिलोम्येनयुंजीत शतभिषाज्येष्ठेदक्षिणवामयोः स्कंधयोः उत्तराहनौ अगस्तिः अधराहनौनक्षत्ररूपोयमः मुखेमंगलः उपस्थेशनिः ककुदिबृहस्पतिः वक्षसिसूर्यः हृदयेनारायणः मनसिचंद्रः नाभ्यांशुक्रः स्तनयोः अश्विनौप्राणापानयोर्बुधः गलेराहुः सर्वांगेषु

ओ॰३ अस्थिषु॰

केतवः रोमसु सर्वेतारागणाः एतत् भगवतः सर्वदेवतामयं रूपं अहरहः संध्यायां वाग्यतः निरीक्षन् उपतिष्ठेत् नमोज्योतिर्लोकाय-
कालायनमोनिमिषांपतयेमहापुरुषायधीमहीति ग्रहर्क्षतारामयमाधिदैविकंपापापहं मंत्रकृतांत्रिकालम् नमस्यतः स्मरतोवात्रि
कालंनश्येततत्कालजमाशुपापम् ८ इतिपंचमेत्रयोविंशः २३ श्रीशुकउवाच अधःस्तात् सवितुः अयुतयोजने राहुः
योसौभगवदनुग्रहात् अमरत्वंग्रहत्वंचलेभे अथसूर्यमंडलंयोजनायुतमाचक्षते द्वादशसहस्त्रंसोमस्य त्रयोदशसहस्त्रंराहोः
यः पर्वणि पर्वणि पूर्ववैरेण सूर्याचंद्रमसौधावति तद्रक्षणार्थं भगवत्प्रयुक्तचक्रस्य तेजसाभीतः सन् निवर्तते तत् उपरागइतिलो
काः वदंति ततोऽधस्तात्सिद्धचारणादीनां स्थानानि ततोधः यक्षरक्षःपिशाचादीनां क्रीडास्थानमंतरिक्षं यावन्मेघाः उपलभ्यंते त
तोधः शतयोजनांतरे इयं पृथ्वी तदुपरियावत् हंसश्येनादिपक्षिणउत्पतंति तावत् भूर्लोकः भूमेः सन्निवेशावस्थानं एतत् व
र्णितम् अथभूमेः अधस्तात्सप्तभूविवराणि एकैकशः अयुतयोजनांतरेणआयामविस्तारेण उपकॢप्तानि तद्यथा अतलं वितलं सु
तलं महातलं रसातलं तलातलं पातालमिति एतेषुबिलस्वर्गेषु स्वर्गादप्याधिककामभोगैश्वर्यानंदविभूतिभिः सुसमृद्धभवनोद्या
नाक्रीडविहारेषुदैत्यदानवकाद्रवेयाः नित्यंप्रमुदिताः निवसंति यत्रमयेननिर्मिताः संपदः स्वर्गलोकश्रियंअतिशयिताः यत्रअहो
रात्रादिभयंचनास्ति यत्रसर्पशिरोमणयः सर्वंतमः प्रबाधंते यत्ररोगाद्याः वयोवस्थाश्चनतत्रस्थानांआधिव्याधयः मृत्युश्चनभव
ति विनासुदर्शनात् यस्मिन् चक्रे प्रविष्टे असुरवधूनांगर्भाः स्त्रवंति पतंतिच अथ अतले मयपुत्रः बलोनिवसति यस्यजृंभमाणस्यमु
खतः त्रयः स्त्रीगणाः उत्पन्नाः स्वैरिण्यः कामिन्यः पुंश्चल्यइति ताः बिलायनं प्रविष्टं पुरुषं हाटकारव्यरसेन भोगसमर्थं कृत्वा रमयंति १४
ततः अधस्तात् वितले हाटकेश्वरः भवान्यासह आस्ते तयोर्वीर्यतः प्रवृत्ता हाटकीनामनदी तद्वेतोदकं अग्निः वायुना इद्धः सन् पिबति

तेनफूत्कृत्यत्यक्तं तत्‌हाटकारव्यंस्कवर्णभवति तत्‌पुरुषास्त्रीभिः सहधारयंति ततोधःस्रुतलेपुण्यश्लोकः विरोचनात्मजः श्रीवाम
नेनहृतलोकत्रयः श्रियाभिजुष्टः स्वधर्मेणहरिं आराधयन्‌सन्‌बलिःआस्ते एतत्‌ऐश्वर्यं भूदानस्यफलंनभवति वासुदेवेपात्रेउपप
न्नेसति प्रतिपादितस्यतस्य मोक्षहेतुत्वात्‌ पुरुषः यस्यसकृन्नामगृणन्‌ कर्मबंधंधुनोति तस्मिन्‌हरौसमर्पितस्य भूदानस्यनेदंफ
लं भगवान्‌ असुंबलिंनैवानुगृहीतवान्‌ यतः भगवत्स्मृतिमोषणं ऐश्वर्यमेवातनुत अथबलेश्चरितं अष्टमस्कंधे विस्तरिष्यते य
स्यद्वारिनारायणः गदापाणिः अवतिष्ठते येनदशकंधरः पादांगुष्ठेनउच्चाटितः ततोधः तलातलेमहादेवेनरक्षितः गतसुदर्शनभ-
यः मयोनामदानवःआस्ते ततोधः महातलेकाद्रवेयसर्पाणांक्रोधवशोनामगणः गरुडात्‌उद्विग्नमनाः क्वचित्प्रमत्ताःसंतः कलत्रादि
संगेनविहरंति ततोधःरसातलेदैतेयाःदानवाःपणयःनिवातकवचाःसंति तेचसरमयाइंद्रदूत्याउक्ताभिर्वाग्भिःइंद्रात्‌बिभ्यति
ततोधःपातालेनागाः वासुकिशंखकुलिकादयःनिवसंति तेषांअनेकफणासुस्थिताःमणयःअंधकारंविधमंति ३७ इतिपंच
मेचतुर्विंशः २४ श्रीशुकउवाच अथपातालस्यमूलप्रदेशेत्रिंशद्योजनसहस्रांतरे भगवत्कलाअनंतः आस्ते यंचतुर्व्यू
होपासने संकर्षणमित्याचक्षते सात्वताः यस्यमूर्द्धनिइदंभूमंडलं सर्षपइवलक्ष्यते इदंसंहर्तुः यस्यभ्रूमध्यतः सांकर्षणोनाम-
रुद्रः त्र्यक्षः त्रिशूलंउत्तंभयन्‌ उदतिष्ठत्‌ यस्यांघ्रिकमलनखमंडलेषुनमंतोनागपतयः स्ववदनानिविलोकयंति किंच नागराज
कुमार्यः यस्यवदनारविंदं सव्रीडं पश्यंति सः अनंतः संहृतरोषःसन्‌लोकस्वस्तये आस्ते सचसुरादिभिः ध्यायमानःनीलवासाःए
ककुंडलः हलपृष्ठेकृतहस्तः अपरिम्लानकांत्याः नवतुलसिकायाः सुरभिमधुरसेनमाद्यन्मधुकराणां मधुरगीतेन शोभितांस्वां
वनमालांबिभर्ति तस्यानुभावान्‌ नारदः तुंबरुणासहब्रह्मणः सभायां वर्णयामास यन्नामश्रुतं अनुकीर्तितं सत्‌ नृणांअंहः हंतिय

स्यमूर्द्धनि अर्पितो भूगोलः अणुवद्भाति तस्य वीर्याणि सहस्रजिह्वोपि कः गणयेत् एवंप्रभावः अनंतः रसायाः मूले स्थितः सन् स्थि-
तये क्ष्मां बिभर्ति हे राजन् एवं एताः यथाकर्मविनिर्मिताः गतयः तथा वर्णिताः किमन्यत्कथयामः १५ इति पंचमे पंचविंशः २५
राजोवाच हे महर्षे एतत् लोकस्य वैचित्र्यं कथम् श्रीशुकउवाच कर्तुः त्रिगुणत्वात् श्रद्धया भिन्नाएव कर्मगतयः सर्वाएव
सर्वेषां श्रद्धातारतम्येन भवंति अविद्याकृतकामपरिणामलक्षणाः सृतयः सहस्रशः प्रवृत्ताः ताः वर्णयिष्यामः राजोवाच हे भ
गवन् नरकानाम किं देशविशेषाः त्रिलोक्याः बहिः अंतराले वा संति तत् कथ्यताम् श्रीशुकउवाच जगत्याः अंतराले दिशि दक्षि
णस्यां भूमेः अधस्तात् जलादुपरि नरकाः संति यत्र भगवान् पितृराजो यमः मृतजंतूनां कर्मानुरूपं दंडं कुर्वन्नास्ते ऽथ तान् शृणु तामिस्रं
१ अंधतामिस्रं २ रौरवः ३ महारौरवः ४ कुंभीपाकः ५ कालसूत्रम् ६ असिपत्रवनम् ७ सूकरमुखम् ८ अंधकूपः ९ कृमिभोजनः १० सं
दंशः ११ तप्तसूर्मिः १२ वज्रकंटकशाल्मली १३ वैतरणी १४ पूयोदः १५ प्राणरोधः १६ विशसनम् १७ लालाभक्षः १८ सारमेयादनम्
१९ अवीचिः २० अयःपानम् २१ क्षारकर्दमः २२ रक्षोगणभोजनः २३ शूलप्रोतः २४ दंदशूकः २५ अवटनिरोधः २६ पर्यावर्तनरः २७ सू
चिमुखम् २८ इति नरकाः संति यः परवित्तापत्यकलत्राणि हरति सः दूतैः पाशबद्धः तामिस्रनरके निपात्यते अनशनानुद्पानताड
नादिभिः पीड्यमानः कश्मलं याति १ यस्तु पुरुषं वंचयित्वा दारादीनुपभुंक्ते सः अंधतामिस्रे पतति तत्र यातनास्थः वेदनया नष्टमति
र्नष्टदृष्टिश्च भवति २ यस्तु मम इदं अहमिति मत्वा भूतद्रोहेण स्वकुटुंबमेव पुष्णाति सः रौरवे निपतति यथानेन विहिंसिताजंतवः
ते एव परत्र रुरवो भूत्वा तं खादंति ३ यः केवलं देहंभरः सः महारौरवे निपतति तत्र क्रव्यादा नाम रुरवः तन्मांसं खादंति ४ यस्तु पशू
न् पक्षिणो वा प्राणैः सह रंधयति तं अमुत्र दूताः तप्ततैले कुंभीपाके रंधयंति ५ यश्च पितृविप्रध्रुक् सः तप्तताम्रमये समदेशे कालसूत्राख्ये पत

ति तत्र क्षुत्पिपासाभ्यां अंतर्दह्यमानः पशुरोमसंख्यासहस्रवर्षाणि आस्ते ६ यस्तु निजवेदमार्गं त्यक्त्वा पाखंडं आश्रितः तं असिप-
त्रवनं प्रवेश्य कशया प्रहरंति तत्र असिपत्रैः छिद्यमानसर्वांगः हा हतोस्मीति वेदनया मूर्च्छितः पदे पदे निपतति स्वधर्महा पाखंडमा
र्गफलं भुंक्ते ७ यस्तु राजा राजपुरुषो वा अदंड्ये दंडं ब्राह्मणे वा शरीरदंडं करोति सः सूकरमुखे निपतति तत्र इक्षुदंडवत् निष्पिष्य
माणावयवः क्वचिन्मूर्च्छितः कश्मलं याति ८ यस्तु भूतानां ईश्वरकल्पितवृत्तीनां व्यथां करोति सः अंधकूपे पतति तत्र तैः पशुप
क्षिमृगसरीसृपमशकमत्कुणमक्षिकादिभिः पीड्यमानः दुःखं प्राप्नोति ९ यस्तु अकृतपंचमहायज्ञः असंविभज्य अश्नाति सः कृ
मिकुंडे कृमिभूतः कृमिभिर्भक्ष्यमाणः कृमिभोजनस्तिष्ठति १० यस्तु स्तेयेन बलाद्वा विप्रस्य अन्यस्य वा हिरण्यरत्नादीनि हर
ति सः संदंशे पतति तत्र लोहमयैः तप्तैः संदंशैः त्वचि छिंदंति ११ यस्तु अगम्यां स्त्रियं स्त्री वा अगम्यं पुरुषं गच्छति तौ कशया ता
डितौ तप्तसूर्मिनरके तप्तलोहमय्या प्रतिमया आलिंगयंति १२ यस्तु पश्वादिषु गमनं करोति तं वज्रकंटकशाल्मलीं आरोप्य निष्क
र्षंति १३ ये तु राजन्याः राजपुरुषा वा धर्ममार्गान् भिंदंति ते विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवाहिन्यां वैतरिण्यां उपत
प्यंते १४ ये त्विह वृषलीपतयः नष्टशौचाचाराः ते विण्मूत्रश्लेष्ममलपूर्णार्णवे पतंति तदेव बीभत्सितं अश्नंति १५ ये त्विह श्वगर्दभ
पतयः मृगयाविहाराः अतीर्थे मृगान् घ्नंति तान् परे तान् प्राणरोधे इषुभिर्विध्यंति १६ ये दांभिकाः दंभयज्ञेषु पशून् विशसंति तान्
वैशसे नरके दूताः घातयंति १७ यस्तु असवर्णां भार्यां द्विजो रेतः पातयति तं लालाभक्षे नरके निपात्य रेतः पाययंति १८ ये तु दस्यु
रूपाः राजानो भटा वा अग्निदाः गरदाः ग्रामादीन् लुंठंति तान् वज्रदंष्ट्राः श्वानः ७२० खादंति १९ यस्तु साक्ष्ये अनृतं वदति सः अवीचि
नरके योजनशतोच्छ्रायात् गिरिमूर्ध्नः अधःशिराः निपात्यते २० क्वचिद्विप्रो राजन्यो वैश्यो वा तत्कलत्रं वा प्रमादतः सुरां पिबति तान् अयःपाने

नरकेनिपात्यतेषांमुखेवन्हिनाद्रवीभूतंलोहरसंनिषिंचंति २१ यः आत्मसंभावनेनजन्मतपोविद्यावर्णाश्रमवतःश्रेष्ठान्नवहुम
न्यते सः क्षारकर्दमे अवाक्‌शिरानिपतति यातनाःभुंक्ते २२ येत्विह पुरुषाः पुरुषमेधेनभैरवादीन् यजंते याःकामरूपाःस्त्रियःनृ
पशून् खादंति तानि हतैर्हताः पशवः तेरक्षोगण भोजनेरक्षोगणाः भूत्वाशस्त्रेणछित्वा तद्रक्तं पिबंति नृत्यंतिच २३ येत्विहवैअ
नागसः पशून् अरण्येग्रामेवाविश्वास्यशूलसूत्रादिषुप्रोतान् घातयंति तेप्रेत्यशूलादिषुप्रोताःतिग्मतुंडैः कंकवटादिभिः हन्यमानाः
आत्मशमलंस्मरंति २४ येतुभूतान्उद्वेजयंति तेदंदशूकेनिपतंति २५ येतुगृहादिषुभूतानिरुंधंतितान् अवटनिरोधेसगरेणव
ह्निनाधूमेननिरुंधंति २६ यः अतिथीन् पापचक्षुषानिरीक्षते तस्य अक्षिणी वज्रतुंडाः गृध्राः कंककाकवटादयः पर्यावर्तनरके
बलात् उत्पाटयंति २७ यःधनगर्वितः मानीतिर्यक्‌प्रेक्षणः द्रव्यनाशचिंतयाशुष्यहृदनहृदयः ग्रहइव अर्थंरक्षति सःप्रेत्यसू-
चीमुखेनरकेपतति यत्रदूताः तंअंगेषुसूत्रैः बध्नंति २८ एवंविधाः नरकाः यमालयेसंति सहस्रशः तेषुअधर्मवर्तिनः यथाकर्मणा
विशंति धर्मानुवर्तिनः तुस्वर्गादौमर्त्यलोकेधर्माधर्मशेषाभ्यांविशंति एतावानेवआंडकोशःपुराणेषुचतुर्दशधाविकल्पेनगीयते ए
तत् भगवतः नारायणस्यस्थूलं मायामयंरूपंयः आदरेणपठति शृणोति श्रावयति सः भक्त्याविशुद्धबुद्धिः अथात्ममपितत्वंवेत्ति
यतिः भगवतः स्थूले रूपेनिर्जितंमनः धियाशनैः सूक्ष्मे रूपेनयेत् हे नृप भूद्वीपवर्षसरिदद्रिनभः समुद्रपातालदिक्‌नरकभगणलो
कसंस्थाइयंमयातवगीता एवंईश्वरस्यइदंस्थूलंरूपंते अनुवर्णितम् ३८ इतिपंचमस्कंधेचूर्णिकायांषड्विंशोऽध्यायः २६
अयंस्कंधःसमाप्तः ॥ श्रीकृष्णार्पणंभूयात् ॥ श्रीरस्तु ॥ ॥ ॥ ॥